# मागधम्

## संस्कृत-प्राकृतविभागस्य संस्कृत-शोधवाङ्मयस्य

पञ्चमोदयः

# प्रमाणमीमांसा



संरक्षक

**मान्यवरः श्रीगोपालप्रसादमहोदयः**

मगधविश्वविद्यालयस्योपकुलपति

प्रेरक

**श्रीजगदीशचन्द्रदासः**


सम्पादक

**लब्धस्वर्णपदकः, प्रो० डॉ० नेमिचन्द्र शास्त्री**

एम्० ए० (सस्कृत-प्राकृत-हिन्दी), पी-एच० डी०, डी० लिट्०,

ज्योतिषाचार्य , न्याय-काव्य ज्योतिषतीर्थश्च

सस्कृत-प्राकृत-विभागाध्यक्ष —आरास्थ एच्० डी० जैनकालेजस्य

सयोजकौ

**डॉ० रामनाथपाठकः 'प्रणयी'**

एम्० ए० ( सस्कृत-प्राकृत ), पी-एच० डी०, साहित्यव्याकरणायुर्वेदाचार्यः

**डॉ० राजारामजैनः**

एम्० ए० ( प्राकृत-हिन्दी ) पी-एच० डी०,

आरास्थहरप्रसाददासजैनकालेजस्य

सस्कृत-प्राकृत-विभागस्य प्राध्यापकौ

# मागधम्

[ मगधविश्वविद्यालयस्याङ्गीभूतहरप्रसाददास - जैनकालेज-संस्कृत-प्राकृत-विभागस्य संस्कृत-शोधवाङ्मयस्य पञ्चमोदयः ]

## प्रमाणमीमांसा



सस्कृत-प्राकृत-विभाग.
एच० डी० जैनकालेजः, आरा
मगधविश्वविद्यालय

दिसम्बर, १९७१
विक्रमाब्दः २०२८

# विषयानुक्रमणिका

# अन्वीक्षानये प्रमाणचर्चा

श्रीअनन्तलालठाकुरन्यायालङ्कारः
पाटलीपुत्रस्थ काशीप्रसादजायसवालविद्यापीठस्य निदेशकः

आन्वीक्षिक्यपराभिधं न्यायशास्त्रं तावत् सर्वविद्याना प्रदीपः सर्वकर्मणामुपाय सर्वधर्माणामाश्रयश्चेति कौटिल्यापराभिधेन विष्णुगुप्ताचार्येणार्थशास्त्रीयविद्योद्देशप्रकरणे प्रकीर्तितम् । अथ कोऽय न्याय इति प्रश्ने प्रमाणैरर्थपरीक्षण न्याय इति नीयते प्राप्यते विवक्षितार्थसिद्धिर नेति चाचार्याणा समुत्तरम् । पञ्चावयवेन न्यायवाक्येन तावन्नैयायिकैर्विवक्षितोऽर्थः प्रतिपाद्यते । आद्ये पुनरवयवचतुष्टये तत्स्वीकृताना चतुर्णां प्रमाणाना विन्यासो जायते । तथा हि भगवत. पक्षिलस्वामिनो निर्देश तेषु प्रमाणसमवाय । आगम' प्रतिज्ञा । हेतुरनुमानम् । उदाहरण प्रत्यक्षम । उपमानमुपनय । सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति । विवक्षितार्थप्रतिपादनविधौ प्रमाणाना प्रयोजनमेतेन स्फुट प्रतिपादितम् । नैयायिकाभिमतेषु षोडशपदार्थेषु मूर्धभिषिक्त प्रमाणमित्यपि प्रदर्शित भगवता । तथा हि न्यायभाष्यम्—अर्थवति च प्रमाणे प्रमाता प्रमेयं प्रमितिरित्यर्थवन्ति भवन्ति । कस्मात् ? अन्यतमापायेऽर्थस्यानुपपत्ते । तत्र यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्ति' स प्रमाता । स येनार्थं प्रमिणोति तत् प्रमाणम् । योऽर्थ प्रमीयते तत् प्रमेयम् । यदर्थविज्ञान सा प्रमिति । चतसृष्वेवंविधासु तत्त्वं परिसमाप्यते इति । अत्रोद्द्योतकरेणान्यतमशब्दः प्रमाणपर इति निर्धारितम् । शोभतेतमा चेदमित्यविवादोऽत्र परेषाम् । पक्षिलोक्ते कोटिचतुष्टये गौतमप्रदिष्टाना षोडशपदार्थानामन्तर्भाव साधु सगच्छते ।

सत्यपि प्रमाणस्य पदार्थेषु प्राधान्ये नास्य लक्षणं सूत्रकारेण प्रदर्शितम् । विभागस्तु प्रत्यक्षानुमानोपमानशब्दा प्रमाणानि [ १.३] इति सूत्रेण विहितम् । अत्रोपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्याद् बोद्धव्यम् । करणार्थाभिधानो हि प्रमाणशब्द । तद्विशेषसमाख्याया अपि तथैव व्याख्यानमिति पक्षिल । प्रदर्शित चानेन समाख्यानिर्वचनमुखेन अक्षस्याक्षस्य प्रतिविषय वृत्तिः प्रत्यक्षम् । मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानम् । उपमानं सामी-

प्यमानम् । शब्द शब्दयतेऽनेनार्थ इति ज्ञाप्यत इति । एतावता प्रमाणस्य लक्षण-विप्रतिपत्तिर्निराकृता भाष्यकारेण ।

सख्याविप्रतिपत्तिस्तु नोदेति, कण्ठत एव सूत्रकारेण चतूर्णां समुल्लेखात् । अथापि चेदत्र सन्देह, पश्यन्तु श्रीमन्त परीक्षापर्वणि द्वितीयाध्यायस्यान्तिममाह्निकम् । तत्र न चतुष्ट्वमैतिह्यार्थापत्तिसभवाभावप्रामाण्यादिति पूर्वपक्षविप्रतिपत्तिमुक्तेषु चतुर्षु ऐतिह्यादीनामन्तर्भावदर्शनेन निरस्तवान् स्वयमेव सूत्रकार । अर्वाक्तननैयायिकेन पुनराचार्यभासर्वज्ञेन न स्वीकृत चतुष्ट्वम् । उपमान तेन परित्यक्तम् । एकदेशिनो गतिर्यथा तथा वा भवतु । बह्वर्थसूचकस्य प्रमाणसूत्रस्य चतुष्ट्वपरत्वे पक्षिलोद्द्योतकरवाचस्पत्युदयनादीना सम्प्रदायप्रद्योतकानामेकान्ता समतिरित्यवधेयम् । कवितार्किको जयन्तभट्टस्तु—

एकेनानेन सूत्रेण द्वय चाह महामुनि ।
प्रमाणेषु चतु सख्या तथा सामान्यलक्षणम् ॥

इत्याह ।

तर्कस्य प्रमाणत्वेन ग्रहण न गौतमप्रस्थानस्वीकृतम् । स तूहविशेष तत्त्वज्ञानार्थो न तत्त्वज्ञानम् । न त्ववधारयति, न व्यवस्यति, न निश्चिनोति एवमेवेदमिति । प्रमाणात्तु निश्चय । अत प्रमाणानुग्राहकत्वेऽपि तर्कस्य न साक्षात् प्रमाणत्व न्यायदृशा ।

प्रमाणेषु प्रत्यक्षस्यैव मुख्यता । तस्य कृते पारमर्ष लक्षणसूत्रम्-इन्द्रियार्थसन्निकर्षोत्पन्न ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मक प्रत्यक्षम् [१ १.४] । प्रत्यक्षप्रमाणमिदं ज्ञानस्वरूपकम् । षड्भेदभिन्नस्येन्द्रियस्यार्थेन सन्निकर्षादस्योत्पत्ति । अत्रात्ममन सन्निकर्षो मनइन्द्रियसन्निकर्षश्च न प्रत्याख्येयौ तयोर्ज्ञानमात्र प्रतिकारणत्वादिति पूर्वपक्ष । तथा हि आत्मेन्द्रियमनोऽर्थसन्निकर्षाद् यन्निष्पद्यते तदन्यत् [ ३ १ ३ ] इति काणादसूत्रम् ।

आत्मेन्द्रियमनोऽर्थाना सन्निकर्षात् प्रवर्तते ।
व्यक्ता तदात्वे या बुद्धि प्रत्यक्ष सा निरुच्यते ॥

इति चरकसहिता [१ ११ २०]

आत्मेन्द्रियमनोऽर्थाना सयोग उपदिश्यते ।
ज्ञान देशादिसविष्ट प्रत्यक्षमिति तद् भवेत् ॥

इति विष्णुधर्मोत्तरपुराणे

आत्मा सहेति मनसा मन इन्द्रियेण
स्वार्थेन चेन्द्रियमिति क्रम एष शीघ्र ।
योगोऽयमेव मनस किमगम्यमस्ति
यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा ॥

इति वृहत्सहिता [१४।३]

अत्र प्रत्यक्षज्ञानस्य विशिष्टं कारणमेव नैयायिकेनोच्यते । यत्तु समानमनुमानादिज्ञानस्य न तत् पराक्रियते । एतेन मनस इन्द्रियेण योगोऽपि व्याख्यात । श्रावणादिभेदेन भिद्यमानस्य प्रत्यक्षज्ञानस्य नाय भिद्यत इति भाष्यकारपरिहर ।

सर्वाणीन्द्रियाणि प्राप्यकारीणीति सौत्र सिद्धान्त । अत्र चक्षुषि श्रवणेन्द्रिये च न प्राप्यकारित्वमिति दिङ्नाग । यथा हि प्रमाणसमुच्चये तद्युक्ति

सान्तरग्रहण न स्यात् प्राप्तौ ज्ञानेऽधिकस्य च ।
अधिष्ठानाद् वहिर्नाक्ष तच्चिकित्सादियोगत ॥
सत्यपि च वहिर्भावे न शक्तिर्विषयेक्षणे ।
यदि च स्यात् तदा पश्येदप्युन्मील्य निमीलनात् ॥

न्यायवार्त्तिक उद्द्योतकरेण सूक्ष्मेक्षिकया दिग्नागमतं खण्डितम् । तैजसस्य वै सतश्चक्षुष प्रदीपवदेव रश्मिमार्गेणार्थप्राप्ति । अर्थदेशे चोत्पन्न शब्दो वीचीतरङ्गन्यायेन श्रोत्रदेश प्राप्नोतीति तन्निष्कर्षसक्षेप । सन्निकर्षश्चाय षड्भेदभिन्न इत्युद्द्योतकरविश्वरूपादय । ते च भेदा सयोग, सयुक्तसमवाय, सयुक्तसमवेतसमवाय, समवाय, समवेतसमवायो विशेष्यविशेषणभावश्चेति तत्तद्ग्रन्थतो विस्तरशो ज्ञेया । इमे लौकिकसन्निकर्षा । अलौकिकसन्निकर्षा. पुन सामान्यलक्षणज्ञानलक्षणयोगजा ग्रन्थान्तर उद्भाविता व्याख्याताश्चेति तत एव ज्ञेया ।

सूत्रदेहेऽव्यपदेश्यमित्यङ्गस्याशाब्दमित्यर्थ । अत्राहुर्वैयाकरणा

न सोऽस्ति प्रत्ययो लोके य शब्दानुगमादृते ।
अनुविद्धमिव ज्ञान सर्व शब्देन भासते ॥

इति । अत्र यदिदमनुपयुक्ते शब्दार्थसबन्धेऽर्थज्ञान प्रत्यक्षरूप तन्न नामधेयशब्दन व्यपदिश्यते । बालमूकादे प्रत्यक्षापलापस्तु दु शक नवृद्धवक्तृप्रत्यक्षे ततो मौलिको भेदः । शब्दसंश्लेषस्तेषामागन्तुक इति सिद्धान्तविद ।

अव्यभिचारीति सूत्राङ्गस्य मरीचीकादिसन्निकर्षात् जलादिज्ञाने प्रत्यक्षत्ववारणं तात्पर्यम् ।

स्मृत्यनन्तर च पुनर्लिङ्गदर्शनमय च धूम इति । तदिदमन्तिम प्रत्यक्ष पूर्वाभ्या प्रत्यक्षाभ्या स्मृत्या चानुगृह्यमाणो लिङ्गपरामर्शोऽनुमानमिति ।

अनुमिते. करणविषये नैयायिकेषु मतभेदो दृश्यते । अनुमापकहेतुपदार्थेऽनुमेय-धर्मस्य व्याप्तिस्मरणमनुमिते. करणमिति केचित् । अनुमिते चरम कारण लिङ्ग परामर्श । स एवानुमिते करणमित्यन्ये । प्रथमलिङ्गदर्शनात् चरमलिङ्गदशनं यावत् सर्व करणमनुमितेस्तन्नान्तरीयकत्वात् प्रधानोपसर्जनविवक्षाया लिङ्गपरामर्श इति न्याय्यमित्युद्द्योतकर । लिङ्गपरामर्शविषयो लिङ्गमेवानुमितिकरणमित्यु-दयन । हेतुरपदेशो लिङ्ग प्रमाणमित्यनर्थान्तरमिति काणादसूत्रमेवोदयनस्या-लम्बनमित्याभाति ।

अनुमानस्य प्रमेयनिर्णयविधावपि दृश्यते मतभेद । अनुमानस्य धर्मिणि धर्म-विशेषोऽनुमेय इति केचित् । प्रसिद्धौ धर्मिधर्मौ पर्वतवह्निरूपाविति न तयोरनुमेय-त्वम्, तयो परस्परसबन्ध एवानुमेय पर्वतादावसिद्धत्वादित्यपर । तत्र प्रसिद्ध तद्युक्त धर्मिण गमयिष्यतीति दिङ्नाग । अनुमेयोऽग्निमानय धूम इति न्यायवार्त्तिक कृत । बहुग्रन्थविस्तारिणीय कथा ग्रन्थान्तरतो ज्ञया ।

त्रिविधमित्यनुमानस्य विधात्रय दर्शयति । पूर्ववदिति प्रथमा शेषवदिति द्वितीया सामान्यतोदृष्टमिति चरमा । तत्र पूर्वशदिति पूर्वशब्देन कस्य परामर्श इति न प्रदिष्टं सूत्रकृता, पक्षिलेन त्वादौ पूर्वशब्देन कारण शेषशब्देन कार्य तदन्य-लिङ्गक च सामान्यतो दृष्टमित्युक्तम् । तथा हि पूर्ववदिति यत्र कारणेन कार्यमनु-मीयते यथा मेघोन्नत्या भविष्यति वृष्टिरिति । अत्र मेघोन्नतिर्वृष्टे कारणमित्यनुमान-मिद पूर्ववन्नाम्ना ज्ञेयम् । गौडपादोऽप्येवमेव । शेषवत् तत् यत्र कार्येण कारणमनु-मीयते यथा नद्या पूर्णत्वादिना कारणभूतस्य वर्षस्यानुमानम् । सामान्यतोदृष्ट यथा गत्यदर्शनेऽपि स्थितिदेशविपर्यये गत्यनुमान यथा आदित्यस्य ।

पक्षिलमतेन विधात्रयस्य लक्षणोदाहरणयो. प्रकारान्तरमपि भवितुमर्हति । तथा हि पूर्ववदिति यत्र यथापूर्वं प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्याप्रत्यक्षस्यानुमान यथा धूमेनाग्निरिति । शेषवन्नाम परिशेष. । स च प्रसक्तप्रतिषेधेऽन्यत्राप्रसगात् शिष्यमाणे सप्रत्यय । यथा सदनित्यमित्येवमादिना द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य शब्दस्य तस्मिन् द्रव्यगुणकर्मसशये, न द्रव्य-मेकद्रव्यत्वात् । न कर्म शब्दान्तरहेतुत्वात् । यस्तु शिष्यते सोऽयमिति शब्दस्य गुणत्वप्रतिपत्ति । सामान्यतो दृष्ट नाम यत्राप्रत्यक्षे लिंगलिंगिनो सम्बन्धे केन-चिद्दर्थे लिंगस्य सामान्यादप्रत्यक्षो लिंगी गम्यते । यथा इच्छादिभिरात्मा । इच्छादयो गुणा., गुणाश्च द्रव्यसस्थाना. । तद् यदेषा स्थानं स आत्मेति ।

अत्र व्याख्यानद्वयस्य तात्पर्यनिर्णयविधावाधुनिकाना दृश्यते मतभेद.। कथमत्र विधाद्वयम् ? सूत्रकारादनन्तर गते बहुतिथे काले जातस्य भाष्यकर्तुं पक्षिलस्वामिनो नासीत् सूत्रहृदयज्ञानम् । अत कल्पनामूलकमेव विधाद्वय तेनोपन्यस्तमत्रेति केचन। भाष्यकारात् पूर्वमपि न्यायसूत्रव्याख्यातारो बभूवु । तयो कयोश्चित् परस्परविरुद्ध मतद्वितय पक्षिलेन यथावत् कक्षीकृतमितीतरे। अत्र पूर्वमतमश्रद्धेयम् न्यायपरम्पराविच्छेदे प्रमाणानुपलम्भात् । परमतमपि भाष्यकारात् प्राक् सूत्रव्याख्याया सत्ताया प्रमाणाभावान्निरधिष्ठानमिति ज्ञेयम् । न्यायवैशेषिकयो समानतन्त्रत्व स्वीकुर्वता पक्षिलेन न्यायसूत्रव्याख्याविधौ यत्र-यत्र सिद्धान्तसाम्य तत्रैकमेव व्याख्यान प्रदर्शितम्। यत्र तु वैषम्यम्, तत्रादौ न्यायमत प्रदर्श्य अन्ते वैशेषिक मत स्वातन्त्र्येण प्रदर्शितम्। तथा हि आदौ न्यायसमत द्वादशविध प्रमेय व्याख्याय पक्षिलेन वैशेषिकानुसारम् अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवाया प्रमेयमिति सप्तपदार्थाना वैशेषिकभाषितानामपि प्रमेयत्व प्रतिपादितम्। तथैवात्रापि न्यायसमतमनुमानविधात्रयं व्याख्याय वैशेषिकानुसार व्याख्याविधान्तरमपि प्रदत्तमित्यास्माकीन पन्था । वैशेषिकसूत्रै प्रशस्तपादकृतेन पदार्थधर्मसग्रहेण च प्रस्तुतसदर्भस्य तुलना मतमस्माक परिपुष्णाति। प्रशस्तपादानुसार दृष्ट सामान्यतोदृष्टमित्यनुमान द्विविधमेव। नात्र पूर्ववच्छेषवतोश्चर्चा। पाशुपतसूत्रोपरि कौण्डिन्यभाष्ये पुनर्दृष्टस्यैव पूर्ववच्च शेषवच्चेति प्रकारभेदौ । प्रशस्तपादोक्त दृष्ट नाम प्रसिद्धसाध्ययोरत्यन्तजात्यभेदेऽनुमान९ । उदाहरण पुन गव्येव सास्नामात्रमुपलभ्य देशान्तरेऽपि सास्नामात्रदर्शनाद् गवि प्रतिपत्ति । इद तु पूर्ववदनुमानमेव धूमेनाग्निग्रहणमिव। शेषवदिति नामधेय काणादसूत्रेषु प्रशस्तपादसग्रहे वा नायाति। किं तु शब्दस्य गुणत्वप्रतिपत्तिविधौ प्रागुक्त प्रकार समान सूत्रगतेन वाय्वनुमानप्रकारेण। प्रशस्तपादीय सामान्यतोदृष्ट तावत् प्रसिद्धसाध्ययोरत्यन्तजातिभेदे लिंगानुमेयधर्मसामान्यानुवृत्तितोऽनुमानम् । यथा कर्षकवणिग्राजपुरुषाणा च प्रवृत्ते फलवत्त्वमुपलभ्य वर्णाश्रमिणामपि दृष्ट प्रयोजनमनुद्दिश्य प्रवर्तमानाना फलानुमानमिति। तच्च नातीव भिद्यते प्रस्तुतान्न्यायभाष्यगताद् वैकल्पिकात् सामान्यतोदृष्टानुमानादिति ध्येयम्। वैकल्पिकव्याख्यात्रितये वैशेषिकमतसाम्यात् वैशेषिकसूत्राणा कार्त्स्न्येनांशतो वा ग्रहणाद् वैशेषिकसम्बन्धोऽस्य नि सशय एव। परिशेषानुमानस्य वैकल्पिकोदाहरणे सदनित्यमित्यस्य वैशेषिकसूत्रस्यांशतो ग्रहणम्। द्रव्यगुणकर्मसशय इत्यत्र तस्मिन् द्रव्य गुण कर्म इति सशय ( २,२,२५ ) इत्यस्य सूचनम्। न द्रव्यमेकद्रव्यत्वादिति शब्दक्रमविपर्यासेन एकद्रव्यवत्त्वान्न

द्रव्यम् ( २,२,२७ ) इत्यस्य काणादसूत्रस्य समुल्लेख । वैकल्पिव्याख्योविषये-
विशेषस्तु सुधीभिर्विभावनीय इत्यलम् ।

अनुमानस्य प्रत्यक्षपूर्वकत्वं त्रैविध्य त्रिकालसम्बन्धश्च चरकेणापि प्रदिष्टम्
तथा हि अग्निवेशतन्त्रे सूत्रस्थाने

प्रत्यक्षपूर्वं त्रिविध त्रिकालं चानुमीयत इति।

अत्र त्रिकालमनुमानमिति विशेष । समतश्चायं भगवत पक्षिलस्वामि-
पादस्य । तथा हि प्रत्यक्षानुमानयोर्विषयभेदपूर्वकभेदप्रदर्शनप्रस्तावे न्यायभाष्यम्,
सद्विषय प्रत्यक्षम् । सदसद्विपयं चानुमानम्, कस्मात् ? त्रैकाल्यग्रहणात् । त्रिकाल-
युक्ता अर्था अनुमानेन गृह्यन्ते । भविष्यतीत्यनुमीयते भवतीति चाभूदिति च ।
असच्छब्दश्चात्रातीतानागतपर. । यथा च भाष्यम्-असच्च खल्वतीतमनागत चेति ।

अनुमानस्य त्रैविध्येऽर्वाचीननैयायिकानामपि संमति । प्रकारे तु भेद प्राची-
नेभ्य । उद्द्योतकरस्वीकृतं प्रकारत्रितयान्तर तावदन्वयि, व्यतिरेकि, अन्वय-
व्यतिरेकि चेति । इतरदपि त्रैविध्यं तदुल्लिखितमस्ति । तथाहि त्रिविधमिति
प्रसिद्धसदसन्दिग्धतामाह । प्रसिद्धमिति पक्षे व्यापकम् सदिति सजातीयेऽस्ति ।
असन्दिग्धमिति सजातीयाविनाभावि इति ।

अनुमानप्रकरणे व्याप्तिवादमुपाधिवाद चाविष्कुर्वद्भिरर्वाक्तनैर्नैयायिकैर्बहु-
सुक्ष्मक्षिका कृता नात्र सक्षिप्ते निवन्धे तद्व्याख्यानावसर इति विरम्यते । हेत्वा-
भासविषये तु किञ्चिदेव वाच्यम् ।

अनुमान तावद्धेतुनिर्भरम् । हेतौ विशुद्धे विशुद्धिरनुमानस्य। विपरीतेत्वशुद्धि ।
लक्षणानि च सद्धेतो पक्षसत्त्व सपक्षसत्त्व विपक्षासत्त्वमबाधितत्वमसत्प्रतिपक्षितत्व
चेति । तत्र पर्वते धूमदर्शनाद् वह्न्यनुमानविधौ सन्दिग्धसाध्यवान् पर्वत पक्षः ।
महानसादयो निश्चितसाध्यवन्तो पक्षा । निश्चितसाध्याभाववन्तो जलह्रदादयो
विपक्षा । हेतो. पञ्च लक्षणानि पञ्चरूपाणीत्यपि कथ्यन्ते । पञ्चरूपोपपन्नत्व
सद्धेतुत्वम् । विपर्यासस्त्वसद्धेतुत्वम् । असद्धेतुर्हेत्वाभास इत्यनर्थान्तरम् । ते
तावद्धेत्वाभासा सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता इति पञ्चैव ।
तदतिरिक्ताना परैरुद्भावितानामेष्वेवान्तर्भाव. प्रदर्शित. । अत आह वरदराज-
स्तार्किकरक्षायाम्—

हेतो. केनापि रूपेण रहिता कैश्चिदन्विताः ।
हेत्वाभासा पञ्चधा ते गौतमेन प्रपञ्चिता ।। इति ।

तथा हि विपक्षसत्त्वाभावे मव्यभिचार , सपक्षसत्त्वाभावे विरुद्ध , पक्षमत्त्वाभावे साध्यसम , असत्प्रतिपक्षितत्वाभावे प्रकरणसम , अबाधितत्त्वाभावे च कालातीतो हेत्वाभामो भवति ।

अत्रेय पृच्छा समुदेति गौतमोक्तेपु पञ्चावयवेपु प्रतिज्ञादीनामपि लक्षणाननुगुणत्वे आभामत्व निश्चप्रचम् । कथ तर्हि गौतमेन हेत्वाभामा एव कण्ठत उक्ता न तु प्रतिज्ञाद्याभाम । तेपामुल्लेखम्तु बौद्धवैशेपिकादिग्रन्थेपु दृश्यत एवेति । अत्र नैयायिकोत्तरमुक्तप्रायमेव । हेतौ विशुद्धे परेपामवयवानामपि विशुद्धि । तदशुद्धौ विशुद्धिरपि विवक्षितप्रतिपादने नालमिति । तथा हि भट्टजयन्तस्योपसहार —

अतएव च शास्त्रेऽस्मिन् मुनिना तत्त्वदर्शिना ।
पक्षाभामादयो नोक्ता हेत्वाभामास्तु दर्शिता ॥ इति ।

वैशेपिका पुन अप्रसिद्धोऽनपदेश असन् सन्दिग्धश्चानपदेश इति सूत्रद्वितयानुमार त्रय एव हेत्वाभामा इति वर्णयन्ति । प्रशस्तपादेन पुनस्तेपा समुद्भवे त्रैरूप्यभङ्ग कारणतया निर्दिष्ट । तथा च पदार्थधर्मसग्रह

यदनुमेयेन सबद्ध प्रसिद्ध च तदन्विते ।
तदभावे च नास्त्येव तल्लिगमनुमापकम् ॥
विपरीतमतो यत्स्यादेकेन द्वितयेन वा ।
विरुद्धासिद्धसन्दिग्धमलिग काश्यपोऽब्रवीत् ॥ इति ।

दिङनागात् प्राक् बौद्धनैयायिका हेतो पाञ्चरूप्य हेत्वाभामाना च पञ्चत्व गणयन्ति स्म । दिङ्नागादय पुनरत्र वैशेपिकानुगा इति नातिरोहित विशेपविद्भि । प्रशस्तपादेन हेतुत्रैरूप्यादिक दिङ्नागानुसार कल्पितमिति मत क्षोदक्षमम् । तस्य कणादानुसारित्वात् काश्यपोल्लेखात् प्रागुक्तवैशेपिकसूत्राभ्या त्रैविध्यस्य कण्ठत प्रतिपादनाच्च । दिङ्नागात् पूर्वं च बौद्धेपु प्रमाणपञ्चकस्यैव परिचयदर्शनात् तस्यैव वैशेपिकानुसारित्व साधु सगच्छते ।

अथोपमानम् । तत्र प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमिति ( १,१,६ ) पारमर्षं सूत्रम् । प्रज्ञातेन सामान्यात् प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति वात्स्यायन । उद्द्योतकरश्च आगमाहितसस्कारस्मृत्यपेक्ष सारूप्यज्ञानमुपमानमित्याह । किं पुनरुपमानेन क्रियते । इति प्रश्ने यदा खल्वय गवा समानमर्थं पश्यति,

प्रत्यक्षतस्तमर्थं प्रतिपद्यत इति समाख्यासंबन्धप्रतिपत्तिश्चोपमानार्थ इति पक्षिलपाद । अस्य पुन' परिष्करण कुसुमाञ्जलावुदयनेन विहितम्

संबन्धस्य परिच्छेद संज्ञाया सज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफल विदु ॥ इति ।

यथा गौस्तथा गवयः, यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णीति साधर्म्योदाहरणानि भाष्यकारस्य । गवयमजानन्नपि नागरिको यथा गौस्तथा गवय इति वाक्य कुतश्चिदारण्यकात् पुरुषात् श्रुत्वा वन गतो वाक्यार्थं स्मरन् यदा गोसादृश्यविशिष्ट पिण्ड पश्यति तदा वाक्यार्थस्मरणसहकृत गोसादृश्यविशिष्टपिण्डज्ञानमुपमानम्, उपमितिकरणत्वात् । गोसादृश्यविशिष्टपिण्डज्ञानानन्तरमयमसौ गवयशब्दवाच्य पिण्ड इति सज्ञासज्ञिप्रतीतिरुपमिति । एवमेवोदाहरणान्तर व्याख्येयम् । साधर्म्योदाहरणवद् वैधर्म्योदाहरणस्यापि एवमन्योऽपि उपमानस्य विषयो लोके बुभुत्सितव्य इति भाष्यवाक्येन सग्रहो बोद्धव्य इति वाचस्पति । साधर्म्यग्रहणं च धर्ममात्रोपलक्षणमिति कृत्वा धिक्करभमतिदीर्घवक्रग्रीवं प्रलम्बोष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमपसदं पशूनामित्यतिदेशवाक्यश्रवणाद् वैधर्म्यादपि करभसंज्ञाप्रतीतिफलमप्युपमानमेवेति तन्मतम् । अत्रोदयनः सूत्रगतिं परिष्करोति । प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् । स च प्रसिद्धो धर्म समान प्रतियोगितया तदुपक्षिप्तोऽसमानश्चेति ।

अथ शब्द । तल्लक्षणसूत्र तु आप्तोपदेश शब्द [ १.१ ७ ] इति । को वा आप्त इति प्रश्ने आप्त खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा । साक्षात्करणमर्थस्याप्ति । तया प्रवर्तते इत्याप्त । लोकानुग्रह एव तस्य प्रवृत्तिमूलमिति परीक्षापर्वणि प्रपञ्चितं भाष्यकारेण । कस्तावदाप्तो भवितुमर्हतीति प्रश्ने ऋष्यार्यम्लेच्छाना समान लक्षण तथा च सर्वेषा व्यवहारा प्रवर्तन्त इति भाष्यकार । अत्रोद्योतकरस्य इन्द्रियसबद्धासबद्धेष्वर्थेषु या शब्दोल्लेखेन प्रतिपत्तिः सा आगमार्थ इति निष्कर्ष. ।

वाक्य त्वाकाक्षायोग्यतासन्निधिमता पदाना समूह. । गौरश्व पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति पदानि न वाक्यम्, परस्पराकाक्षाविरहात् । वह्निना सिञ्चतीति न वाक्यं योग्यताभावात् । अग्निसेकयो परस्परयोग्यता नास्ति । सेकस्तु जलसाध्य । अग्निसाध्य पुन पाक इति ध्येयम् । प्रहरे प्रहरे असहोच्चारितानि गामानय इत्यादि पदान्यपि न वाक्यम्, परस्परसान्निध्याभावात् । यानि पुन साकाक्षाणि योग्यतावन्ति सन्निहितानि च तान्येव वाक्यम् ।

पद च वर्णसमूह । समूहश्चैकज्ञानविषयीभाव वर्णाना क्रमवतामाशुतर-विनाशित्वेन एकदानेकवर्णानुभवसभवात् पूर्वपूर्ववर्णाननुभूय अन्त्यवर्णश्रवणवेलाया पूर्वपूर्ववर्णानुभवजनितसस्कारसहकृतेन अन्त्यवर्णसबन्धेन पदव्युत्पादनसमयग्रहानुगृहीतेन श्रोत्रेणैकदैव सदसदनेकवर्णावगाहिनी पदप्रतीतिर्जन्यते । तत पूर्वपूर्वपदानुभवजनितसस्कारसहकृतेनान्त्यपदविषयेण श्रोत्रेन्द्रियेण पदार्थप्रत्ययानुगृहीतेन अनेकपदावगाहिनी वाक्यप्रतीति. क्रियते ।

अस्य शब्दप्रमाणस्य फल वाक्यार्थज्ञानम् । तच्चैतत् शब्दलक्षण प्रमाणं लोके वेदे च समानम् । लोके तु कश्चिदेव आप्तो भवति । अत किञ्चिदेव लौकिक वाक्य प्रमाणम् । वेदे पुन परमाप्तश्रीमहेश्वरोक्तत्वात् सर्वमेव वाक्य प्रमाणमिति विशेष ।

स द्विविधो दृष्टादृष्टार्थत्वादित्यनेन शब्दस्य विभागो दर्शित यस्येह दृश्यतेऽर्थ स दृष्टार्थ । यस्य चामुत्र प्रतीयते सोऽदृष्टार्थ तथा चात्र शब्दे ऋषिलौकिकवाक्ययो सममेव समावेशो भवति ।

चतुर्णां प्रमाणाना क्वोपयोग इति प्रश्ने एवमेभि प्रमाणैर्देवमनुष्यतिरश्चा व्यवहारा प्रकल्पन्ते नातोऽन्यथेति पक्षिल । युक्तिसिद्ध चैतद् विज्ञात समेषामिति नातिकथनमपेक्षते ।

प्रमाणानामुत्कर्षापकर्षविचारे प्रत्यक्षस्य प्राधान्य निष्प्रपचम् । इतरेषा प्रमाणाना प्रत्यक्षनिर्भरत्व सुग्रह समेषाम् । प्रत्यक्षविज्ञातेऽर्थे न शङ्का न तर्को न च विपर्यास । अनुमानादित परिज्ञातेऽर्थे जायते दिदृक्षा । प्रत्यक्षे सजाते पुनर्नानुमातु न वा शब्दमुखेन ज्ञातुमिच्छा जायतेऽ तर्करसिकानाम् । वर्तमानस्यैव वस्तुन प्रत्यक्षीकरणमिति न तस्यातीतेऽनागते च गति । देशविप्रकृष्टे कालविप्रकृष्टे चानुमानं शरणम् । एतया दृशा प्रत्यक्षनिर्भरस्याप्यनुमानस्य प्रत्यक्षादाधिक्यम् । प्रत्यक्षानुमानोपमानागम्ये पुनर्वस्तुनि शब्दप्रमाणगम्यत्वमस्त्येव । उपमान तु जघन्य प्रमाणेषु । सज्ञासज्ञिसबन्धप्रतिपत्तावेवोपयुज्यत इति न तस्यापि सर्वथानुपयोगित्वम् ।

एकस्मिन्नेवार्थे प्रमाणयो प्रमाणाना वा समुपयोगो भवितुमर्हति न वेत्यत्र प्रश्ने नेति बौद्धा तन्मते क्षणिकस्य वस्तुन क्षणान्तरेऽनवस्थानात् प्रत्यक्षगृहीतस्यानुमानकाले सत्त्वैव नास्ति । न हि न्यायमते क्षणिकत्व वस्तुन । तदेव वस्त्वनित्यमपि तथैव तिष्ठति यावद्विनाशकारणसमवधानमिति हि तन्मतम् । अत प्रत्यक्षगृहीतस्यानुमानशब्दाभ्यामपि ग्रहण भवितुमर्हति आग्रहातिशये सति । तथैव

शब्दगृहीतस्य क्वचित् प्रत्यक्षानुमानाभ्याम्, अनुमानगृहीतस्य च शब्दप्रत्यक्षाभ्या ग्रहण सभवति । अय नैयायिकाना प्रमाणसप्लववाद । सर्वत्र सर्वदा प्रमाणानि सप्लवन्त इत्यपि न दृश्यते । यत्रैकस्यैव प्रमाणस्य प्राप्ति तत्र व्यवस्थापि ।

प्रमाणै प्रमेयस्य ग्रहणमित्यत्र चार्वाकातिरिक्ताना भारतीयदार्शनिकाना विमत्यभाव । प्रमाणाना प्रामाण्यग्रहे पुनस्तेषा प्रातिस्विको विशेषोऽस्ति । विषयोऽय गम्भीरो विचारबहुलश्च अत्र सिद्धान्तसूचिके प्राचीनकारिके दिङ्मात्रप्रदर्शनाय समुपस्थाप्येते ।

प्रमाणत्वाप्रमाणत्वे स्वत. साख्याः समाश्रिता ।
नैयायिकास्ते परतः सौगताश्चरम स्वतः ॥
प्रथम परत. प्राहु प्रामाण्य वेदवादिन ।
प्रमाणत्व स्वतः प्राहु परतश्चाप्रमाणताम् ॥ इति ।

नैयायिकाना प्रमाणस्य प्रामाण्य तदितरत्व च प्रमाणान्तरेण सिध्यति । बहु विक्रान्तं चात्र विशेषविद्भिरिति तद्विज्ञातव्यं ग्रन्थान्तरत ।

कुतो वा नूतन वस्तूत्प्रेक्षण मादृशा भवेत् ।
सिद्धान्तानुसृतौ चेष्टा कृतात्र गुरुशासनात् ॥
दोषश्चेत् स मदीयोऽस्तु गुणश्चेत् स तु मद्गुरो ।
मित्रप्रेरणया तूर्णं निर्मितेऽत्र निबन्धके ॥



# न्यायशास्त्रे प्रमाणसमीक्षा

श्रीरुद्रधर झा

का० हि० वि० वि०

अनादेरनन्ताच्च महाकालात्प्रतीयमाने परोक्षापरोक्षप्रवाहे—प्रमाण, प्रमिति, प्रमाता, प्रमेयञ्चेति चतसृषु विधासु तत्त्व परिसमाप्यते। तत्र—'मानाधीना मेयसिद्धिरि' त्यादिवचनेभ्य प्रमाणस्यैव प्राधान्य प्रतीयते। अत एव न्यायशास्त्रस्य प्रथमसूत्रे प्रमाणशब्द एव प्राथम्येनोपात्तोऽक्षपादैर्यतश्च न्यायदर्शन प्रमाणशास्त्रमिति व्यवह्रियते। तत्र—प्रमाणपद, प्रमीयते येन तत् प्रमाणमिति व्युत्पत्तौ प्रोपसृष्टमाधातो करणल्युटि कृते सम्पद्यते, यत्र प्रोपसृष्टो माधातु 'तद्वति तत्प्रकारकत्वरूपप्रकर्ष' विशिष्ट ज्ञान बोधयति, करणल्युट्च तादृशज्ञानकरण प्रमाणमिति प्रत्याययति। अत्र भाष्यम्—'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणमिति, वार्त्तिकञ्च—'प्रमाणेनापि सामान्य परिच्छिद्यते, प्रमाणाभासेनापि। सोऽय प्रमाता यदा प्रमाणेनावधार्य प्रवर्तते, तदाऽस्य प्रवृत्ति समर्था भवति, यदा पुन प्रमाणाभासेनार्थमवधार्य प्रवर्तते, तदाऽसमर्थे'त्यादि। तत्र स्वरूपन्तावत् प्रमाणस्य—बोधाबोधस्वभाव, लक्षणञ्च—अव्यभिचार्यसन्दिग्धार्थोपलब्धिसाधनत्वम्, तथा च—तादृशार्थोपलब्धिजनिका बोधाबोधस्वभावा सामग्री प्रमाणमिति महाशया जयन्तभट्टा।

ननूक्तरीत्या करणसाधनमिद प्रमाणपद, करणञ्च कारणतम, तमवर्थश्चातिशय, स चापेक्षिक, कारणान्तरसम्भवे हि तदपेक्षयाऽतिशयवत्त्वात् किञ्चित् कारणतमं भवति, सामग्र्याश्चैकत्वात्तदतिरिक्तकारणान्तरानुपलब्धे किमपेक्षोऽस्या अतिशय उपपद्येतेति चेन्न, यत एव कारणतम करण, करणसाधनञ्च प्रमाणपद, तत एव सामग्र्या प्रमाणत्वमुपपद्यते, तद्व्यतिरेकेण कारणान्तरे क्वचिदपि तमवर्थायोगात्, अनेककारणसमवधाने कार्यं घटमानमन्यतमकारणासन्निधाने च विघटमान कस्मै अतिशय प्रयच्छेदिति फलोत्पादाविनाभाविस्वभावत्वमर्यादवश्यतया कार्यजनकत्वमतिशय, स च सामग्र्यन्तर्गतस्य कस्यचिदेकस्य कारणस्य न सम्भ-

वति सर्वेषा कारणाना कार्यजन्मनि व्याप्रियमाणत्वात्, सामग्र्यास्तु सोऽतिशय. समुपपद्यते, सन्निहितायान्तस्या फलस्य निष्पन्नत्वात् ।

न च सामग्र्या एकत्वात्तस्या किमपेक्ष करणत्वमिति शङ्कनीयम्, सामग्र्या तदन्तर्गतकारणापेक्षस्य करणत्वस्योपपत्ते । न च समग्रेभ्य. सामग्री भिन्नाऽभिन्ना वा ? आद्ये तेभ्यः सा पृथगुपलभ्येत, अन्त्ये च सर्वकारणाना करणत्वापातात् कर्तृकर्मव्यवहार उच्छिद्येतेति वाच्यम्, समग्रसन्निधानाख्यधर्मस्य प्रत्यक्षमुपलम्भात्, पृथगवस्थितेषु हि कारणेषु न समग्रताप्रत्यय., समुदितेषु तु तेपु स भवतीति सामञ्जस्यात् । न च सामग्र्या पश्यामीत्यादिव्यवहाराभावात्, चक्षुषा पश्यामीत्यादिव्यवहारसत्त्वाच्च तस्या करणत्वं न युक्तमिति वाच्यम्, सामग्री हि सहति', सा हि सहन्यमानव्यतिरेकेण न व्यवहारविषयता भजते, तेन सामग्र्या पश्यामीति न व्यवहार , नयनादीना तृतीयानिर्देशस्य तु फलोपजनना विनाभाविस्वभावत्वाख्यसामग्रीसरूपसमारोपणनिबन्धनत्वेनोपपत्ते ।

वस्तुतस्तु—सामग्री नाम समुदितानि कारणानि, तान्येव पृथगवस्थितानि कर्मादिभावं भजन्ते, समुदितानि तु करणीभवन्तीति तेषा द्वैरूप्यस्यार्धजरतीयत्वात्—कर्तृकर्मविलक्षणा सशयविपर्ययभिन्नार्थबोधविधायिनी बोधाबोधस्वभावा- सामग्री प्रमाणमिति युक्तम् । अतएव 'प्रत्यक्षानुमानोपमानशब्दा प्रमाणानी' ति सूत्रेण प्रमाणाना चतु संख्यत्वं सामान्यलक्षणञ्च सूचयति । तथाहि–प्रत्यक्षानुमानोपमानशब्दसन्निधाने प्रमाणश्रुतिरुच्चरन्ती शब्दशक्तिस्वभावात् सामर्थ्यान्न्यूनाधिकसख्याव्यवच्छेदावधारणेन चत्वार्येव प्रमाणानीति दर्शयति, तेषा सामान्यलक्षणञ्च प्रमीयते येन तत्प्रमाणमितिव्युत्पत्तिनिष्पन्नात् करणार्थाभिधायिन प्रमाणपदादेव 'प्रमाकरण प्रमाणमि' त्यवगम्यते ।

तत्र प्रत्यक्षस्य सकलप्रमाणज्येष्ठत्वात् सर्ववाद्यभिमतत्वाच्च तस्यैव प्रथम लक्षणमाह—'इन्द्रियार्थसन्निकर्षोत्पन्न ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमि'ति । अत्रप्रत्यक्षमिति लक्ष्यनिर्देश , इतरल्लक्षणम्, सजातीयविजातीयव्यवच्छेदो लक्षणप्रयोजनम् , प्रमाणत्वेन सजातीयमनुमानादिविजातीयञ्च प्रमेयादि ताभ्या व्यवच्छिन्न प्रत्यक्षमनेन लक्ष्यते । अत्र यत शब्दोऽध्याह्रियते, तथा च—यत इन्द्रियार्थसन्निकर्षोत्पन्न अव्यपदेश्यमव्यभिचारि व्यवसायात्मक ज्ञान, तत् प्रत्यक्षमित्यन्वय । तत्रेन्द्रियार्थसन्निकर्षोत्पन्नपदम् अर्थानपेक्षजन्मन स्मृत्यादिज्ञानस्य अर्थजन्यस्य च परोक्षविषयकस्यानुमित्यादिज्ञानस्य व्यवच्छेदार्थमुपात्तम् ।

ननु इन्द्रियार्थसन्निकर्षावगमे किं प्रमाणमिति चेन्न, व्यवहितानुपलब्धेरेव तत्र मानत्वात् । यदि हि अर्थासन्निकृष्टमपि चक्षुरादीन्द्रियमर्थं गृह्णीयात्तर्हि व्यवहितोऽप्यर्थस्तत उपलभ्येत, न चोपलभ्यते, तस्मादस्ति तयोः सन्निकर्षस्तेनार्थोपलब्धौ कारणम् । न च तयोरव्यवधानमेवास्तु तत्र कारणम् । किं सन्निकर्षेणेति वाच्यम्, इन्द्रियाणां कारकत्वेन प्राप्यकारित्वात्, असंसृष्टं हि कारकं फलाय कल्पते इति कल्पनीयं संसर्गः कारकं हि अप्राप्यकारि नेति चित्रम्, रसनस्पर्शनयोश्चेन्द्रिययोः स्पष्टं प्राप्यकारित्वमुपलभ्यते इति तत्सामान्यादिन्द्रियान्तरेष्वपि तत्कल्पनीयम्, तथा च श्रोत्रस्य प्राप्यकारिता तद्देशपर्यन्त-समुच्चरितशब्दसदृशशब्दपरम्पराऽऽरम्भणद्वारेणोपपद्यते, घ्राणस्य च पवनान्दोलितचम्पकादिप्रसृततत्परमाणुनिकराधिकरणगन्धग्रहणात्प्राप्यकारिता, चक्षुषस्तु तेजः प्रसरणात् प्राप्यकारित्वम्, एवञ्चेन्द्रिये प्राप्यकारित्वोपपत्तयेऽर्थेन सन्निकर्षोऽभ्युपगन्तव्य एव । उत्पन्नग्रहणेन इन्द्रियार्थयोर्ज्ञानजनकत्वं दर्शितम्, तत्र यथाऽन्वयव्यतिरेकाभ्यामिन्द्रियाणां करणत्वेन ज्ञानजनकत्वम्, तथा ताभ्यामर्थस्य कर्मत्वेन तत् ।

अत्र प्रत्यक्षलक्षणे—सुखादिव्यवच्छेदार्थं ज्ञानपदमुपात्तम् । इन्द्रियार्थसन्निकर्षोत्पन्नं हि ( नयनसुखं को निवारयेत् ) सुखमपि भवतीति तज्जनकं प्रमाणं माभूत् किन्तु ज्ञानजनकमेव प्रमाणं यथा स्यादिति ज्ञानपदोपादानम् । यद्युच्येत संशयव्युदासार्थमत्रोपात्ताद् व्यवसायात्मकपदादेव ज्ञानं लभ्येत नहि सुखादयो व्यवसायात्मका भवन्ति, किन्तु ज्ञानमेव तथाविधमिति, तर्हि विशेष्यनिर्देशार्थं ज्ञानपदोपादानम्, ज्ञानस्य हि सर्वाण्यमूनि विशेषणान्युपात्तानि तदनुपादाने निरालम्बनानि भवेयुः ।

एवं व्यपदिश्यते इति व्यपदेश्यं शब्दकर्मतामापन्नं ज्ञानमुच्यते, यदिन्द्रियार्थसन्निकर्षादुत्पन्नं सद्विषयनाम्ना व्यपदिश्यते रूपज्ञानमित्यादि, तद् व्यपदेश्यं ज्ञानं प्रत्यक्षस्य फलं मा भूदिति तद्व्यवच्छेदार्थमव्यपदेश्यपदमत्रोपात्तम् । अथवा उभयजज्ञानव्यावृत्त्यर्थमत्राव्यपदेश्यपदम् । पुरोऽवस्थितगवादिपदार्थस्वरूपमात्रग्रहणनिष्ठितसामर्थ्यमत्र प्रत्यक्षम्, तथा च यत्र गाभिन निर्दिश्य संज्ञाया उपदेशादिन्द्रियाच्च गोशब्दवाच्योऽयमिति जानाति, तज्ज्ञानमन्वयेन व्यतिरेकेण च शब्देन्द्रियाभ्यां जनितत्वादुभयजमपि शाब्दमेव मन्यते, शब्दलक्षणे विशेषणाभावात् तद् व्यपदेशाज्जातमिति व्यपदेश्यमुच्यते, तद्व्युदासार्थमत्राव्यपदेश्यपदम् ।

एवमत्राव्यभिचारिपदोपादानं व्यभिचारिज्ञानव्यवच्छेदार्थम्, यथा ग्रीष्मे तपति तपने तत्किरणेषु चतुरामूषरभुवमभिहत्य समुत्फलितेषु तरङ्गाकारिषु यद् वारिज्ञानं तदतस्मिंस्तद्ग्रहणाद् व्यभिचारीति तदत्राव्यभिचारिपदोपादानेन व्यवच्छिद्यते ।

एवमत्र संशयव्युदासार्थं व्यवसायात्मकपदमुपात्तम् । यथा दूरात् स्थाणुपुरुष-साधारणं धर्ममारोहपरिणाहरूपमुपलभमानस्य, तयोरन्यतरत्र वर्तमानान् वक्रकोट-रादीन् करचरणादीन् वा विशेषानपश्यत, समानधर्मदर्शनप्रबुद्धसंस्कारतया चोभयवर्तिनोऽपि विशेषाननुस्मरत पुरोऽवस्थितार्थविषयकं 'स्थाणुर्वा पुरुषो वे' ति संशयात्मक ज्ञानमुपजायते, तदिन्द्रियार्थसन्निकर्षोत्पन्नत्वादिविशेषणविशिष्टमपि प्रत्यक्षस्य फलं मा भूदिति तद्व्यवच्छेदायात्र व्यवसायात्मकपदोपादानम् ।

प्रत्यक्षपद रूढ्या साक्षात्कारात्मकज्ञानविशेषे प्रवर्तमानमपि प्रकृतानुरोधात् तज्जनकपरम्, अथवा जन्यत्वेन ज्ञानं प्रतिगतमक्ष प्रत्यक्षमिति योगार्थेनैवात्रोपपत्ति । एवमनुमानादीन्यपि कालान्तरे समीक्षणीयानि भवेयुरिति शम् ।

एवं समीक्षिते प्रत्यक्षेऽवसरप्राप्तत्वाद् बहुवादिसम्मतत्वाच्चेदानी समीक्ष्यतेऽनुमानम्, तस्य प्रामाण्यं तावन्न सहन्ते चार्वाका—धर्मे हि साध्ये न हेतो पक्षधर्मता, धूमस्य वह्निधर्मत्वात् । धर्मिणि च साध्ये न हेतोरन्वयिता, न हि यत्र धूमस्तत्र पर्वत इत्यन्वय । धर्मधर्मिणोश्च साध्ययोर्न सम्भवति हेतो. पक्षधर्मताऽन्वयिता च, न हि वह्निपर्वतयोर्धर्मो धूम, न च यत्र धूमस्तत्र पर्वताग्नी इत्यन्वय । धर्मविशिष्टे च धर्मिणि साध्ये नोपपद्येते साधनस्य पक्षधर्मत्वान्वयित्वे, न हि वह्निविशिष्टपर्वतधर्मतया धूमः प्रथममुपलब्धुं शक्यते, न च यत्र धूमस्तत्र वह्निमान् पर्वत इत्यन्वय । तस्माद्धेतौ पक्षधर्मत्वान्वयव्यवहारसिद्धये धर्मविशिष्ट-धर्मिणि रूढ पक्षशब्दस्तदेकदेशे धर्मिणि गौण्या वृत्त्योपपादनीय इति गौणलक्षण-त्वादनुमानमप्रमाणम् ।

अपि च देशकालावस्थादिभेदाद् विभिन्नात्मसु प्रतिक्षणपरिवर्त्तिषु वस्तुषु न शक्योऽविनाभावनियमोऽभिधातुम् । न च सम्भवति सामान्यद्वारकोऽप्यविनाभाव-निश्चय, वास्तवसामान्यस्यासत्त्वात् । न च भूयो भूय सहचारदर्शनेनापि शक्याऽवधारयितु व्याप्ति, सहस्रशोऽपि दृष्टे सहचारे व्यभिचारावधारणात्, साध्यशून्ये ससारे साधनासत्त्वस्यायोगिना ज्ञातुमशक्यत्वाच्चेत्यप्रामाण्यमेवापन्नमनुमानस्येति ।

अत्रोच्यते—श्रोतृषु विद्यमानमज्ञानं सशय वा विपर्यय वा समुच्छेत्तु किञ्चिद्वदन्ति वादिनो लौकिका परीक्षकाश्च, तत्रान्यतममपि परकीय न शक्यमर्वाग्दृशा प्रत्यक्षेण प्रतिपत्तुम्, अप्रतिपन्नान्यतदन्यतमो वक्ता प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येतेत्यकामेनाप्यवश्यमभ्युपगन्तव्यमनुमानप्रामाण्यम्, एवञ्च परेषा शब्देन व्यहारेण वा तदीय तदन्यतममवबुध्य वादिनो भवन्ति सम्मानभाज ।

तथा चानुमानप्रमाणमशक्यापलापमेव, सर्वलोकप्रसिद्धत्वात्, साधारणा अपि

हि जना जानन्ति नियतादर्थान्नियतमर्थान्तरम्, प्रत्यक्षदृष्टेपि हि पदार्थजाते तज्जातीयत्वलिङ्गेन सुखस्य दु खस्य वा साधनत्व विनिश्चित्य तदुपाददते जहति वा लौकिका । अतो यद्दर्शनाद्यत्प्रतीतिर्भवति, भाव्यन्तयो केनचित्सम्बन्धेनावश्यम्, उपपाद्यताञ्च स सम्बन्धोऽविनाभावशब्देन नियमपदेन वा साहचर्यनाम्ना वा। स च ज्ञात एवानुमित्यङ्ग , नाज्ञात , अन्यथा नारिकेलद्वीपनिवासिभिरपि धूमदर्शनाद्वह्निरनुमीयेत, न चैवम्भवतीति नियमग्रहणमप्यपेक्षणीयतामर्हति।

ननु सकलवह्न्यवह्निगतान्वयव्यतिरेकग्राहितत्प्रत्यक्षमन्तरेणाशक्य भवितु नियमग्रहणेनेति चेन्न, प्रत्यक्षेण वह्निसहचरितस्यानुपलम्भेन चानग्नेर्व्यावर्तमानस्य धूमस्य ( धूमानलयोरिव तदभावयोरपि सहचरितयो ) उपलम्भादनले नियतो धूम इत्यस्य सर्वविषयेण मनसा ज्ञातु शक्यत्वात् । न चात्र सकलधूमाग्निसाक्षात्कारोऽपेक्ष्यते, वह्नित्वादिसामान्यपुर सरतया व्याप्तिग्रहणस्योपपत्ते । न च सामान्यस्यावास्तवत्वम्, अनुगतप्रतीत्युपपत्तये तस्यावश्यमभ्युपगन्तव्यत्वात् ।

अत एव, सत्त्वाच्चानुमित्यात्मकप्रमायास्तदुपपादकनियमग्रहोत्पादकमशेषवह्न्यादिव्यक्तिविषयकं वह्नित्वादिसामान्यज्ञानरूपया सामान्यलक्षणाख्यालौकिकप्रत्यासत्त्या जायमान प्रत्यक्ष यौक्तिक मन्यन्ते। अत एव बाला अपि यथा यत्प्रमितवन्तस्तत्तथैव प्रायो व्यवहरन्ति ।

अत्रावधेयम्—यत्र भावयो साध्यसाधनभावस्तत्र—भावयो साहचर्यमन्वय , तदभावयोश्च साहचर्यं व्यतिरेक । यत्र चाभावयो साध्यसाधनभावस्तत्र—अभावयो साहचर्यमन्वय , तदभावयो ( भावयो ) च साहचर्यं व्यतिरेक । भावयोर्यादृशी व्याप्यव्यापकता, तद्विपरीता व्याप्यव्यापकता तदभावयोरिति ।

इत्थमनुमाने तत्प्रामाण्ये च व्युत्पादिते नहि पक्षपदस्य गौणत्वेनानुमानप्रमाणस्य गौणता सम्भवतीत्यनुमानप्रमाणस्य लक्षणसूत्रमुपस्थाप्यते—'तत्पूर्वकं च त्रिविधमनुमान पूर्ववच्छेषवत्सामान्यतो दृष्ट च' इति ।

अत्रानुमानमिति लक्ष्यनिर्देश , तत्पूर्वकमिति लक्षणम्, तदितिच सर्वनाम्नोपक्रान्त प्रत्यक्ष परामृश्यते । तथा च यदि—तत् = प्रत्यक्ष पूर्वं = कारण यस्य तत् तत्पूर्वकमिति व्युत्पाद्येत, तर्हीदमनुमानलक्षणमतिव्याप्नुयादुपमानाद्यपि, तस्यापि प्रत्यक्षपूर्वकत्वादिति ते = प्रत्यक्षे, पूर्वे = कारणे यस्य तत् तत्पूर्वकमिति व्युत्पाद्यतामर्हति। तत्रैक प्रत्यक्ष व्याप्तिग्राहि यत् स्मरणद्वारेणैव भजतेऽनुमानस्य कारणताम्, द्वितीयश्च प्रत्यक्ष लिङ्गदर्शनम्, यत् स्वत एवाप्नोति तस्य हेतुताम् । एवञ्च ते द्वे प्रत्यक्षे अनुमानस्यैव कारण, न तूपमानादेरिति लक्षणमेतदुपपन्नम् ।

ननु प्रत्यक्षविशेषद्वयपूर्वकत्वमनुमानलक्षणमनुमानाभासेषु सव्यभिचारादिष्वपि समन्वेतु प्रभवतीति तत्रातिव्याप्तिरेतस्य लक्षणस्येति चेन्न, समेषा प्रमाणाना तेषाञ्च लक्षणाना प्रमाघटिततया प्रमाघटकैरर्थोत्पन्नाव्यभिचारिव्यवसायात्मकत्वैरपि घटितत्वस्य दुर्निवारत्वात् । न चैवमप्येतस्य लक्षणस्याव्याप्तिर्दुर्वारैवागमादिपूर्वकेष्वनुमानेष्विति वाच्यम्, तत्रापि मूलभूतकारणत्वेन प्रत्यक्षस्यैव स्वीकारात्, अन्यथाऽनवस्थापातात् । अत एवोक्तश्लोकवार्त्तिकानुमानग्रन्थे—

"यत्राप्यनुमिताल्लिङ्गाल्लिङ्गिनि ग्रहण भवेत् ।
तत्रापि मौलिक लिङ्गं प्रत्यक्षादेव गम्यते ॥" इति

अनुमान त्रिविध पूर्ववच्छेषवत्सामान्यतोदृष्टभेदात् । तत्र—पूर्वं = कारणमस्यास्तीतिव्युत्पत्तिनिष्पन्नेन पूर्ववच्छब्देन कारणगतमुन्नतत्वादिधर्मजातमभिधीयते । तथा च यत्र कारणेन कार्यमनुमीयते, तत्रत्यमनुमान पूर्ववत्, यथा—इमे मेघा समनन्तरोत्पादिवृष्टिमन्त सातिशयोन्नत्यादिरूपधर्मवत्त्वात् पूर्वोपलब्धतादृशमेघवदित्यत्रत्यम् । एव शेष = कार्यमस्यास्तीतिव्युत्पत्तिनिष्पन्नेन शेषवच्छब्देन कार्यगतं वैशिष्ट्यमुच्यते । तथा च यत्र कार्येण कारणमनुमीयते, तत्रत्यमनुमान शेषवत्, यथा—इय नदी वृष्टिमत्पृष्ठदेशसंसृष्टा फेनिलकलुषत्वादिविशिष्ट पूरोपेतत्वात् पूर्वोपलब्धतादृशनदीवदित्यत्रत्यम् । एव यत्र कार्यकारणेतरलिङ्गेन अकार्यकारणभूतं साध्यमनुमीयते, तत्रत्यमनुमान सामान्यतोदृष्टम् । यथा—इद चूतफल विलक्षणरसवत् विशिष्टरूपवत्त्वात् तादृशचूतफलवदित्यत्रत्यम् । इत्यल पल्लवितेन ॥

# जैनदर्शने प्रमाण-चिन्तनम्

डॉ० दरबारीलाल कोठिया

काशी-हिन्दू-विश्वविद्यालये 'रीडर' पदे प्रतिष्ठित

प्रास्ताविकम्

जैनदर्शने कीदृक्प्रमाणतत्त्वमितीदमिह चिन्त्यते । तत्र प्रथम सामान्यतस्तत्त्वस्य विचारो विधीयते । तत्त्वमर्थो वस्तु सच्चेति पर्यायशब्दा । यदस्तित्ववत् तत्सदुच्यते । तत्त्व-वस्त्वर्था इमे त्रयोऽपि सद्वदेवास्तित्ववन्त । फलत एतेषा चतुर्णामेक एवाशय ।

तत्त्व मूलतो द्विविधमुपायोपेयभेदात् । तत्रोपायतत्त्व द्विप्रकार ज्ञापक कारकञ्चेति । ज्ञापकमपि द्वेधा प्रमाण प्रमाणाभास चेति । यथार्थज्ञापक प्रमाणमन्यथार्थज्ञापक च प्रमाणाभासमिति । अनयोर्द्वयोर्ज्ञापकत्वाविशेषेऽपि प्रमाणेन सम्यक्परिच्छित्ति. प्रमाणाभासेन तु मिथ्यापरिच्छित्तिर्जायते[1] ।

कार्यजनक कारक तत्त्वम् । तदपि द्वेधोपादाननिमित्तभेदात् । तत्र तावत् यत्स्वय कार्यरूपेण परिणमति तदुपादानम् । यच्च कार्योत्पत्तौ सहकारि भवति तन्निमित्त कारकम् । यथा घटोत्पत्तौ मृत्पिण्ड उपादान दण्डचक्रकुम्भकारादि निमित्तम् । न्यायदर्शने यत्समवायिकारण तदेव जैनदर्शने उपादानमिति नाम्नि भेदो नार्थे । न्यायदर्शनाभिमतमसमवायिकारण तु समवायिकरणगतरूपादिस्वरूप तत्सयोगस्वरूप चोपादानान्न भिन्नमभिमतम् ।

उपेयतत्त्वस्यापि द्वौ भेदौ स्त —ज्ञेय कार्य चेति । ज्ञापकविषय ज्ञेयं कारणनिष्पाद्य च कार्यमिति ।

इत्य तत्त्वसामान्यमभिधायेदानी प्रकृतस्य प्रमाणतत्त्वस्य विचार प्रस्तूयते । तत्र तावत्प्रमाणस्वरूप निगद्यते ।

---

१. प्रमाणादर्थसमिद्धिस्तदाभासाद्विपर्यय ।
—माणिक्यनन्दि, परीक्षामुखस्याद्यश्लोक ।

'मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम्,' 'तत्प्रमाणे' [ त सू. १-९,१० ] इत्याभ्यां सूत्राभ्यां तत्वार्थसूत्रकारा श्रीमद्गृद्धपिच्छाचार्या मत्यादिरूपं सम्यग्ज्ञानं प्रमाणस्वरूपं प्रतिपादयन्ति। तत्समाश्रित्यैव समन्तभद्राचार्या 'स्वपरावभासकं यथा प्रमाणं भुवि बुद्धिलक्षणम्' [ स्वयम्भू० ६३ ] इत्यनेन ज्ञानविशेषणत्वेन 'स्वपरावभासकम्', पदं योजयन्तः सम्यग्ज्ञानमेव प्रमाणलक्षणमुद्घोषयन्ति। सिद्धसेनाचार्या 'प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम्' [ न्यायाव. का. १ ] इति प्रतिपादनेन गृद्धपिच्छोक्तमेव समन्तभद्रसमर्थितं प्रमाणलक्षणमङ्गीकुर्वन्तो 'बाधविवर्जितम्' विशेषणमपरं निवेशयन्ति। किन्तु बाधविवर्जितविशेषणलभ्योऽर्थः सम्यक्पदेन गृद्धपिच्छाचार्यैरेव संसूचितः। ततस्तदुत्तरवर्त्तिनोऽकलङ्कविद्यानन्द-माणिक्यनन्दिप्रभृतयो विद्वान्सस्तद्विशेषणमावश्यकं न मन्यन्ते। परन्तु ते 'अनधिगतम्' पदं, 'पर' शब्दस्थाने 'अर्थ' शब्दं विनिवेश्य तद्विशेषणत्वेन स्वीकुर्वन्ति। तथा तदर्थसूचकानि 'अपूर्वागृहीताज्ञातादीनि' पदान्यपि स्वग्रन्थेषु तैर्निविष्टानि। इत्थं 'स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम्' इति प्रमाणलक्षणं फलितम्।

जैनदर्शने यत आत्मा ज्ञाता ज्ञानं तत्स्वभावः, ततस्तदेव ज्ञापकं प्रमाणं च भवितुमर्हति। यथौष्ण्यमग्नेः स्वभावस्ततस्तदेव तल्लक्षणं भवति। इन्द्रियसन्निकर्षादि च पराभिमतं प्रमाणलक्षणं त्वज्ञानरूपत्वेनाज्ञाननिवृत्तिरूपां प्रमां जनयितुं न क्षममिति न तत्प्रमाणमर्हति। न्यायदीपिकायां धर्मभूषणेनाप्युक्तम्—**प्रमितिः प्रमाणस्य फलमिति न कस्यापि विप्रतिपत्तिः। सा चाज्ञाननिवृत्तिरूपा, तदुत्पत्तौ करणेन सता तावदज्ञानविरोधिना भवितव्यम्। न चाक्षादिकमज्ञानविरोधि, अचेतनत्वात्। तस्मादज्ञानविरोधिनश्चेतनधर्मस्यैव करणत्वमुचितम्। लोकेऽप्यन्धकारवधटनाय तद्विरोधी प्रकाश एवोपास्यते न पुनर्घटादिस्तदविरोधित्वात्।' किञ्च, अस्वसंविदितत्वादक्षादेनर्थप्रमितौ साधकतमत्वम्, स्वावभासनासक्तस्य परावभासकत्वायोगात्। ज्ञानं तु स्वपरावभासकं प्रदीपादिवत्सुप्रतीतम्। ततः प्रमितावसाधकतमत्वादकरणमक्षादय** इति। अपि च, इन्द्रिये सन्निकर्षे वा प्रमाणे सूक्ष्मव्यवहितविप्रकृष्टानामर्थानामग्रहणं स्यात्। न हि ते इन्द्रियैः सन्निकृष्यन्ते। ततश्च सर्वज्ञत्वाभावप्रसङ्गः। चक्षुरादीनामल्पविषयत्वात् 'सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिभिः' इति वचनात्, ज्ञेयस्य चापरिमाणत्वात्। सर्वेन्द्रियसन्निकर्षाभावश्च, चक्षुर्मनसोः प्राप्यकारित्वाभावात्। चक्षुषोऽप्राप्यकारित्वं

तु युक्तित साधनात् । तथाहि—चक्षुरप्राप्यकारि स्पृष्टानवग्रहात् । यदि प्राप्यकारि स्यात् तदा त्वगिन्द्रियवत् स्पृष्टमञ्जन गृह्णीयात्, न तु गृह्णात्यतो मनोवदप्राप्यकारीत्यवसेयम् । शाखासुधादीधितिसमानकालग्रहणान्यथानुपपत्तेश्च चक्षुरप्राप्यकारीति निश्चीयते। तदेव सन्निकर्षाभावेऽपि चक्षुषा रूपप्रतीतिर्जायते इति सन्निकर्षोऽव्यापकत्वात्प्रमाणस्य स्वरूप न भवतीति ज्ञेयम् ।

प्राभाकरा ज्ञातृव्यापार सांख्या वृत्ति (इन्द्रियवृत्ति) जयन्तभट्टा सामग्रीरूप कारकसाकल्य प्रमाणलक्षण निरूपयन्ति पर तल्लक्षणानामव्याप्त्यादिदोषदूषितत्वेन जैनदार्शनिकैर्न तानि प्रमाणलक्षणानि कक्षीकृतानि । यद्यपि बौद्धा 'अज्ञातार्थप्रकाशक (ज्ञान) प्रमाणम्', 'प्रमाणमविसंवादि ज्ञानम्' इत्यादिप्रतिपादनैर्ज्ञानमेव प्रमाणमभ्युपगच्छन्ति, तथापि, तदभिमतस्य ज्ञानस्याव्यवसायरूपत्वेन स्वार्थनिश्चायकत्वासम्भवान्न तत्प्रमाणकोटिमुपयाति । तत स्वार्थव्यवसायात्मक कथञ्चिदपूर्वार्थविषयक सम्यग्ज्ञान प्रमाणमिति ।

## प्रामाण्य-चिन्ता

अस्य प्रमाणस्य प्रामाण्य स्वत परतो वेत्यत्र दार्शनिकाना विवाद । तत्र न्यायवैशेषिका प्रामाण्यमप्रामाण्य चोभय परत एवेति मन्यन्ते । उभय स्वत इति सांख्या वदन्ति । प्रामाण्य स्वत , अप्रामाण्य परत , इति मीमांसका सङ्गिरन्ते । अप्रामाण्य स्वत , प्रामाण्य तु परत इति ताथागता कथयन्ति । स्याद्वादिनो जैनास्तूभयमपि कथञ्चित्स्वत कथञ्चित्परत इति प्रथयन्ति । अभ्यासदशाया स्वतोऽनभ्यासदशाया च परत इति भाव । अत्रेद तात्पर्य यत्प्रामाण्यस्याप्रामाण्यस्य च ज्ञप्ति परिचितविषये स्वत , अपरिचितविषये तु परत । उत्पत्तिस्तूभयस्योभयत्र परत एव गुणदोषाभ्या तज्जननात् । प्रत्यक्षादौ सर्वत्र प्रामाण्य गुणेभ्य एव जन्यते । अप्रामाण्य तु दोषेभ्य एव इति दिक् । विस्तरतस्तु जैन न्यायग्रन्थेषु सुलभमिति ।

## प्रमाणभेदविचार

प्रत्यक्षमेवैक प्रमाणमिति चार्वाका , प्रत्यक्षमनुमान चेति द्वे एव प्रमाणे इति सौगता वैशेषिकाश्च, प्रत्यक्षानुमानागमभेदात्त्रीण्येव प्रमाणानीति सांख्या , सोपमानानि तानीति चत्वारि प्रमाणानीति नैयायिका । अर्थापत्तिसहितानि तानीति पञ्चैव प्रमाणानीति प्राभाकरा । अभावयुक्तानि तानीति षडेव प्रमाणानीति भाट्टाश्च प्रवदन्ति ।

जैना प्रत्यक्षपरोक्षभेदाद्द्विविध प्रमाणमिति निरूपयन्ति । तत्त्वार्थसूत्रे 'आद्ये परोक्षम्' [ त सू १-११ ], 'प्रत्यक्षमन्यत्' [ त सू १-१२ ] इति सूत्राभ्या

आद्ये मतिश्रुते परोक्षं प्रमाणम्, अन्यत् अवध्यादित्रय प्रत्यक्षमिति प्रमाणस्य द्वैविध्यमभिहितम्। इयं दार्शनिकदृष्टि। न्यायदृष्टिस्तु परीक्षामुखसूत्रे प्रकाशिता। तत्र माणिक्यनन्दिभि 'तद्द्वेधा' [प. मु. २-१] 'प्रत्यक्षेतरभेदात्' [प. मु २-२] इति सूत्रद्वयेन प्रमाणद्वैविध्यमेवोक्तम्। किन्तु मतिज्ञान साव्यवहारिक प्रत्यक्षमवध्यादित्रय पारमार्थिक प्रत्यक्षम्, श्रुत स्मृतिप्रत्यभिज्ञानतर्कानुमानानि च चत्वारि परोक्ष प्रमाण प्रतिपादितम्। 'विशद प्रत्यक्षम्' [प म् २-३] 'अविशद च परोक्षम्' [प. मु ३-१] इति प्रत्यक्षपरोक्षलक्षणाभ्या सकलप्रमाणाना पराभिमतानामुपमानादीनामनयोरेव प्रत्यक्षपरोक्षयोरन्तर्भावान्न ततोऽतिरिक्त प्रमाणमिति।

प्रत्यक्ष विशदज्ञानात्मकं प्रत्यक्षत्वात्। यन्न विशदज्ञानात्मक तन्न प्रत्यक्षम्, यथा परोक्षम्। प्रत्यक्ष च विवादापन्नम्। तस्माद्विशदज्ञानात्मकमिति व्यतिरेक्यनुमानेन प्रत्यक्षस्य विशदज्ञानात्मकत्व प्रसाधितम्। वैशद्यं च प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासन विवक्षितमिति इद प्रत्यक्ष द्विविध मुख्यसव्यवहारभेदात्। तत्रेन्द्रियानिन्द्रियनिमित्त देशतो विशद ज्ञान साव्यवहारिक प्रत्यक्षम्। इन्द्रियानिन्द्रियव्यतीत निरावरणमशेषतो विशदं च ज्ञान मुख्य प्रत्यक्षम्। तदेव ज्ञानमशेषतो विशद भवितुमर्हति यदतीन्द्रिय निरावरण च। यच्चेन्द्रियजन्य मनोजन्य सावरण च तन्नाशेषतो विशद सकलार्थविषय चेन्द्रियाणा सम्बद्धवर्तमानार्थग्राहकत्वेन सूक्ष्मान्तरितदूरार्थानामग्रहणात्। मनसा च पञ्चेन्द्रियग्राह्यार्था एव गृह्यन्ते न सूक्ष्मादय। अत सूक्ष्मादिसकलार्थविषयकमतीन्द्रियमशेषतो विशद निरावरणमात्ममात्रसापेक्ष ज्ञानमस्त्येव। विशेषस्तु प्रमेयकमलमार्त्तण्डादवगन्तव्य।

परोक्षमविशदज्ञानात्मक परोक्षत्वात्। यन्नैव तन्नैव यथा प्रत्यक्षम्। परोक्षं च विवादापन्नम्। तस्मादविशदज्ञानात्मकमिति। तदिद पञ्चविध स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभेदात्। पञ्चविधमपीद ज्ञान प्रत्यक्षादिपूर्वकत्वात्परोक्षमभिधीयते। तद्यथा—स्मृति प्रत्यक्षपूर्विका, प्रत्यभिज्ञान प्रत्यक्षस्मृत्युभयपूर्वकम्, तर्क. प्रत्यक्षस्मृतिप्रत्यभिज्ञानपूर्वक, अनुमानं प्रत्यक्षादिपूर्वकम्, आगमोऽपि शब्दश्रवणसङ्केतस्मरणादिपूर्वक। अत स्मृत्यादिक परापेक्षत्वात्परोक्षं प्रमाणम्। परापेक्षाण्यन्यान्यपि यानि ज्ञानानि तानि सर्वाणि परोक्ष एवान्तर्भवन्ति।

तत्र संस्कारोद्बोधनिबन्धन तदित्याकार ज्ञानं स्मृति। यथा स देवदत्त। प्रत्यक्षादवबुध्य प्रवर्त्तमानस्य पुरुषस्य प्रत्यक्षप्रतिपन्नेऽर्थे विसम्वादो न भवति। यत्र च भवति तत्प्रत्यक्षाभासमिति। यथा शुक्तिशकले रजतमिति ज्ञान प्रत्यक्षाभासम्। एव स्मरणादवगम्य प्रवर्त्तमानस्य प्रतिपत्तु स्मृतिप्रतिपन्नेऽर्थेऽपि विसंवादो

न भवति, तत स्मृति प्रमाणमेव। यत्र तु विसवादो जायते सा स्मृत्याभासा। यथा देवदत्तसदृशे देवदत्तस्य स्मरण स्मरणाभासम्। दत्तग्रहादिविलोपापत्तेश्च स्मरण प्रमाणम्। किञ्च, स्मृतेरप्रामाण्येऽनुमानवार्त्तापि दुर्लभा, तया व्याप्तेरविषयीकरणे तदुत्थानायोगादिति। तत इद वक्तव्यम्—स्मृति प्रमाणम्, अनुमानप्रामाण्यान्यथानुपपत्तेरिति।

दर्शनस्मरणकारणक सङ्कलनात्मक ज्ञान प्रत्यभिज्ञानम्। तदेवेद तत्सदृश तद्विलक्षण तत्प्रतियोगीत्यादि यज्ज्ञान जायते तत्सर्वं प्रत्यभिज्ञानमुच्यते। यथा स एवाय देवदत्त, गोसदृशो गवय, गोविलक्षणो महिष, इदमस्माद् दूरम्, अय तस्माज्ज्येष्ठ इत्यादि। प्रथममेकत्वविषयक प्रत्यभिज्ञानम्, द्वितीय सादृश्यनिबन्धनम्, तृतीय वैसादृश्यनिमित्तम्, चतुर्थमपेक्षाविषयकमित्येव नानाविध प्रत्यभिज्ञानम्। एतत्सर्व दर्शनस्मरणकारणकत्वेन प्रत्यभिज्ञानमेव। अविसवादित्वाच्च तत्प्रमाणमिति। येषा सादृश्यविषयमुपमानाख्य प्रमाणान्तर तेषा वैलक्षण्यादिविषय प्रमाणान्तरमनुपज्येत। तथा चोक्तम्—

उपमान प्रसिद्धार्थसाधर्म्यात्साध्यसाधनम्।
तद्वैधर्म्यात्प्रमाण किं स्यात्सञ्ज्ञिप्रतिपादनम्॥
इदमल्प महद्दूरमासन्नं प्राशु नेति वा।
व्यपेक्षात समक्षेऽर्थे विकल्प साधनान्तरम्॥

[ लघीय० का १९, २१ ]

उपलम्भानुपलम्भनिमित्त व्याप्तिज्ञानमूह, तर्क इति यावत्। उपलम्भ प्रमाणमात्रमत्र गृह्यते। यदि प्रत्यक्षमेवोपलम्भशब्देनोच्यते तदा अनुमेयेषु साधनेषु व्याप्तिज्ञान न स्यात्। अथ व्याप्ति सर्वोपसहारेण प्रतीयते सा कथमतीन्द्रियस्य साधनस्यातीन्द्रियेण साध्येन भवेदिति? नैवम्, प्रत्यक्षविषयेष्विवानुमानविषयेष्वपि व्याप्तेरविरोधात्, तज्ज्ञानस्याप्रत्यक्षत्वाभ्युपगमात्। अस्य प्रवृत्तिस्त्वित्थम्—इदमस्मिन्सत्येव भवत्यसति न भवत्येवेति। यथा अग्नावेव धूमस्तदभावे न भवत्येवेति। न चेद व्याप्तिज्ञान प्रत्यक्षतो भवति, साध्यसाधनयोर्व्याप्यव्यापकभावस्य साकल्येन तदविषयत्वात्। न हि तदियतो व्यापारान् कर्त्तु शक्नोति, अविचारकत्वात् सन्निहितविषयत्वाच्च। नाप्यनुमानेन, तस्यापि देशादिविषयविशिष्टत्वेन सर्वदेशकालोपसहारवत्या व्याप्तेरविषयत्वात्। तद्विषयत्वे वा प्रकृतानुमानानुमानान्तरविकल्पद्वयानतिक्रमात्। तत्र प्रकृतानुमानेन व्याप्तिप्रतिपत्तावितरेतराश्रयत्वप्रसङ्ग—व्याप्तौ हि प्रतिपन्नायामनुमानमात्मानमासादयति,

तदात्मलाभे च व्याप्तिप्रतिपत्तिरिति । अनुमानान्तरेण व्याप्तिप्रतिपत्तावनवस्थेति नानुमानगम्या व्याप्ति । तर्कादेव तन्निर्णय इति । तस्य चाविसंवादित्वेन प्रामाण्यमिति ।

साधनात्साध्यविज्ञानमनुमानम् । यथा धूमाद्वह्निविज्ञानम् । अत्र साध्याविनाभावित्वेन निश्चितं साधनम् इष्टमबाधितमसिद्ध च साध्यम् । त्रैरूप्यादिक न साधनस्य लक्षणम्, तत्सद्भावेऽपि मैत्रीतनयत्वादेर्हेतोरगमकत्वात्, तदभावेऽपि च कृत्तिकोदयादेगमकत्वाभ्युपगमात् । तदुक्तम्—

अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ।
नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ॥
अन्यथानुपपन्नत्व यत्र, किं तत्र पञ्चभि ।
नान्यथानुपपन्नत्वं यत्र, किं तत्र पञ्चभि ॥

अन्यथानुपपन्त्वमविनाभाव इत्यर्थ । विस्तरस्त्वस्मज् **'जैनतर्कशास्त्रमें अनुमानविचार'** इत्याख्यात्शोधप्रवन्धादवगन्तव्य इति ।

आप्तवचनादिनिबन्धनामर्थज्ञानमागम. । यो यत्रावञ्चक स तत्राप्त । तस्य वचनम् । आदिशब्देताङ्गुल्यादिसकेतग्रह । तन्निवन्धन यस्यार्थज्ञानस्य तदागम इत्यर्थ । ये खल्वागमस्यापौरुषेयत्व निरूपयन्ति तदसम्भवि, वचनस्य ताल्वादिव्यापारजन्यत्वात्तत्समुदाय आगम , तत्कथमसावपौरुषेय इति । बौद्धा वचनवाच्यमन्यापोह मन्यन्ते, सोऽपि युक्तितो न घटते । यस्माद्धि शब्दात् यस्मिन् प्रतीति प्रवृत्तिप्राप्तय समाधिगम्यन्ते स एव शब्दार्थ । न चान्यापोहे कस्यचित्प्रतीति प्रवृत्ति' प्राप्तिर्वा दृश्यते । सर्वो हि श्रोता 'गामानय' इत्यादिक वचनं श्रुत्वा विधिरूपे गवादावेव प्रवर्तमानो दृष्ट , तस्य तस्यैव प्रतीति प्राप्तिश्च भवति नान्यापोहस्येति नान्यापोहो वचनार्थ , अपितु वस्तुभूतार्थ एव तद्वाच्य इति सूष्ठुक्तमर्थज्ञानमागम इति ।

एतत्पञ्चविध ज्ञानं परोक्ष' प्रमाण परायत्तत्वादिति ।

## प्रमाण-विषय-मीमासा

स्याद्वाददर्शने प्रमाणस्य ज्ञेयविषयो न केवलं सामान्यम्, न केवलो विशेष , नापि परस्परनिरपेक्षमामान्यविशेषोभयम् यथाऽन्ये साख्यादयो मन्यन्ते । किं तर्हि ? सामान्यविशेषात्मकं सर्वं वस्तुजातं तदेव प्रमाणस्य ज्ञेयम् । प्रत्यक्षत' परोक्षतो वाऽनेकान्तात्मकं वस्त्ववगम्यते । अय घट इति हि ज्ञाने मृत्तिकाद्रव्यान्वित एव घटपर्याय प्रतिभासते । 'गामानय' इत्युक्ते गोसामान्यविशिष्ट श्यामादि-

गोविशेषमेवावगच्छति श्रोता । न हि केवलस्य गोत्वस्यानयन सम्भवति तथाऽप्रतीते । नापि गोत्वरहितस्य केवलस्य श्यामादिगोविशेपस्यानयनम्, तथाऽ सम्भवात् । तत सामान्यविशेपात्मकमेव वस्तु प्रमाणस्य ज्ञेयमिति । एतदेव माणिक्यनन्दिभिरुक्तम्—'सामान्यविशेषात्मा तदर्थो विषय ' [ प० मु० ४-१ ] 'अनुवृत्तव्यावृत्त - प्रत्यय-गोचरत्वात्पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामेनार्थक्रियोपपत्तेश्च' [ प० मु० ४-२ ] इति हेतुभ्या तैस्तत्प्रसाधितञ्चेति । सामान्य द्वेधा तिर्यगूर्ध्वताभेदात्' सदृशपरिणामस्तिर्यक्, खण्डमुण्डादिपु गोत्ववत्', 'परापर विवर्तव्यापिद्रव्यमूर्ध्वता, मृदिव स्थासादिषु', 'विशेषश्च', 'पर्यायव्यतिरेकभेदात्' 'एकस्मिन् द्रव्ये क्रमभाविन परिणामा पर्याय., आत्मनि हर्पविषादादिवत्' 'अर्थान्तरगतो विसदृशपरिणामो व्यतिरेक, गोमहिषादिवत्' [ प० मु० ४-३, ४,५,६,७,८ ] इति सूत्रै सामान्यविशेपयोर्विशेपतो विवरण त्व तै कृतमिति ।

प्रमाणफलचिन्तनम्

प्रमाणस्य फल प्रमिति । मा चाज्ञाननिवृत्तिरूपा । प्रमेय हि ज्ञात्वा प्रमाता प्रथम प्रमेयसम्बन्धिनोऽज्ञानान्निवर्तते तदनन्तरमुपादेयमुपादत्ते हेय जहात्युपेक्षणीय चोपेक्षते । त ोऽज्ञाननिवृत्ति साक्षात्फल हानोपादानोपेक्षाश्च परम्पराफलम् । तदुक्त प्रमेयरत्नमालाकारेण—'द्विविध हि फल साक्षात्पारम्पर्येणेति । साक्षादज्ञाननिवृत्ति पारम्पर्येण हानादिकमिति; प्रमेयनिश्चयोत्तरकालभावित्वात्तस्येति' [ प्रमेयरत्नमाला ५-१ ] । इद द्विविधमपि फल प्रमाणाद्भिन्नमभिन्न वेति जिज्ञासाया यौगा भिन्न मन्यन्ते, सौगताश्चाभिन्नमिति । स्याद्वादिनस्तु कथञ्चिद्भिन्न कथञ्चिच्चाभिन्नमिति प्रथयन्ति । प्रमाण करणरूप फल च क्रियारूपमिति करणक्रियाभेदात्तयोर्भेद । य प्रमिमीते स एव निवृत्ताज्ञानो जहात्यादत्ते उपेक्षते चेति प्रतीतेस्तयोरभेद इति प्रत्येयम् । उक्तञ्च—'प्रमाणादभिन्न भिन्न च' [ प० मु० ५-२ ] अत्राकलङ्कदेवा आहु —

प्रमाणस्य फल तत्त्वनिर्णयादानहानधी ।
नि श्रेयस पर वेति केवलस्याप्युपेक्षणम् ॥

[ न्या० वि० का० ४७६ ]

समन्तभद्राचार्या अपि प्रतिपादयन्ति —

उपेक्षा फलमाद्यस्य शेपस्यादानहानधी ।
पूर्वा वाऽज्ञाननाशो वा सर्वस्यास्य स्वगोचरे ॥ [आप्तमी० १०२]

इत्थ जैनदर्शने प्रमाणलक्षण-सख्या-विषय-फलमाश्रित्य विशदतया प्रमाणचिन्तन विहितमस्तीति दिक् ।

# मीमांसादर्शने प्रमाणविचारः

डॉ० गजाननशास्त्री मुसलगावकरः
[ प्राध्यापक —काशी हिन्दुविश्वविद्यालये ]

धर्म एव मीमासादर्शनस्य प्रधानो विषय । मीमासादर्शनकारेण महामुनिना जैमिनिना धर्मस्य लक्षण 'चोदनालक्षणोऽर्थोधर्म' इति प्रतिपादितम् । अस्य धर्मस्यावगतये 'वेद' एव प्रमाणमिति सिद्धान्त । प्रत्यक्षादिप्रमाणैर्धर्मस्य ज्ञान न भवितुमर्हति । अस्मिन्नेव प्रसङ्गे प्रत्यक्षादिप्रमाणाना विचारस्तज्ज्ञै कृतोऽस्ति मीमासादर्शने ।

प्रमाणलक्षणम्

मीमासका अपि 'यथार्थानुभव' मेव प्रमा कथयन्ति । स्मृति सशय वा प्रमात्वेन न स्वीकुर्वन्ति । अतएव भाट्टा अज्ञाततत्त्वार्थज्ञानम्प्रमा वदन्ति । अस्यानधिगतार्थस्य ज्ञानोत्पादक करणम्प्रमाणमिति वदन्ति । अमुमेवार्थं शास्त्रदीपिकाकारा पार्थसारथिमिश्रा इत्थम्प्रतिपादयन्ति–'कारणदोपबाधकज्ञानरहितमगृहीतग्राहि ज्ञानम्प्रमाणम्' यस्मिन् ज्ञाने अज्ञातवस्तुनोऽनुभव स्यात्, ज्ञानान्तरेण यस्य बाधो न भवेत् तथा दोषशून्यञ्च यद्भवेत् तदेव प्रमाणपदवीमाटीकते ।

प्रमाणभेदा —भाट्टमते षट् प्रमाणानि भवन्ति । तथाहि—प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्द , अर्थापत्ति , अनुपलब्धिश्चेति ।

प्रत्यक्षानुमानप्रमाणयो र्लक्षणे प्रक्रिये च न्यायशास्त्रदर्शितदिशैव मीमासकानामपि वर्तेते प्रायश , तथापि प्रक्रियाशे कियाँश्चिद् भेदो दृष्टिगोचरो भवति । नैयायिकै वैशेषिकैश्च सन्निकर्ष षड्विधोऽभ्युपगत- । किन्तु भाट्टै सयोग सयुक्ततादात्म्यञ्चेति द्वावेव सन्निकर्षौ स्वीकृतौ । समवायसम्बन्धो नाभ्युपगम्यत एभि । एवमेव अनुमानप्रक्रियाया नैयायिका इव पञ्चावयववाक्यमिमे नाङ्गीकुर्वन्ति, किन्तु 'प्रतिज्ञा हेतुदृष्टान्ताख्यान्, दृष्टान्तोपनयनिगमनाख्यान् वा त्रीनेवावयवान् स्वीकुर्वन्ति ।

भाट्टै स्वीकृते प्रत्यक्षलक्षणेऽव्यापकत्वदोषमुद्भाव्य प्रभाकरेण तदलक्षणमित्युक्त्वा तदस्वीकृतम् ।

प्राभाकरमते स्मृतिभिन्ना संविदेवानुभूतिः, सैव च प्रमाणम्। संस्कारमात्रजन्यं ज्ञानं स्मृतिरित्युच्यते। स्वप्नः संशयोवाऽपि स्मृतिरेव। स्मृतिर्यथार्थाऽपि न प्रमाण-पदवीमधिरोहति। सर्वाण्यपि ज्ञानानि यथार्थानि किन्तु प्रमाणमनुभूतिरेव।

अस्मिन् प्राभाकरमते पञ्चैव प्रमाणानि भवन्ति। तथाहि—प्रत्यक्षम्, अनुमानम् अर्थापत्तिः, शब्दश्चेति।

'साक्षात् प्रतीतिः प्रत्यक्षम्'[1]—साक्षादुत्पन्नं ज्ञानमेव प्रत्यक्षमित्युच्यते[2]। प्रभाकरो वदति-प्रत्यक्षज्ञाने मेय, माता, प्रमा चेति त्रयोऽपि भवन्ति। यथा-अहं घटं जानामि इत्यत्र घटः, अहम्, ज्ञानञ्चेति त्रयाणां सहैव भानं भवति। एतदेव 'त्रिपुटी-प्रत्यक्ष' मिति कथ्यते। अहमित्यात्मनः प्रतीकम्। अस्य भानं यावन्न भवति तावत् कस्यापि वस्तुनो ज्ञानं न संभवति। मेयमातृता प्रतीतिः पृथगेवास्ति, किन्तु सा प्रमातो भिन्ना न भवति। सा तु तद्रूपैवास्ति। मेयमात्रो प्रतीति-स्तुल्यैव। अनयोः प्रतीतिः स्वात्मनः कृते प्रकाशमपेक्षते, किन्तु प्रमा स्वयंप्रकाशात्मिका। तस्याः प्रतीतिः स्वयमेव भवति। अत एव सुषुप्तौ मेयमात्रो प्रकाशात्मकत्वाभावात् तौ प्रकाशितौ न स्तः। तयोः प्रकाशेऽन्यापेक्षा भवति, किन्तु प्रमा स्वयंप्रकाशा, तांप्रकाशयितुं नान्यसाहाय्यमपेक्ष्यते[1]। इन्द्रियार्थयोः साक्षात्सम्बन्धेन 'प्रत्यक्षज्ञानं' भवति। प्राभाकरमते इन्द्रियार्थयोः सम्बन्धो द्विविधो भवति। ज्ञानविषयैः सह इन्द्रियाणां यः सम्बन्धः स संयोग इत्येकः प्रकारः, विषयगतधर्माणां सम्बन्धः समवायः, समवेतसमवायो वा इत्यपरः प्रकारः। द्रव्य-जातिगुणैः सहेन्द्रियाणां सम्बन्धे सति तेषां प्रत्यक्षज्ञानं संभवति।

सन्निकर्षो द्विधा भवति तत्समवायः, तत्कारणसमवायश्च, किन्तु प्रत्यक्षस्य प्रक्रियायां सन्निकर्षश्चतुर्धा भवति। तथाहि-आत्मना सह मनसः, मनसा इन्द्रियस्य, तथा द्रव्येण तद्रूपादिगुणैः सहेन्द्रियस्य। अन्तः सुखदुःखादीनाम्प्रत्यक्षे मनसः अर्थेनात्मना च सह द्विधैव सन्निकर्षो भवति।

सर्वेषामपि गुणानां प्रत्यक्षज्ञानं भवति। एतेषां मते द्रव्यज्ञानं विनापि रूपादिगुणानां ज्ञानं क्वचिच्च रूपादिगुणानां ज्ञानं विनापि द्रव्यज्ञानं भवति। नहि खलु नैयायिकानामिव अत्रापि नियमः।

---

१ रामानुजार्य —'तन्त्ररहस्यम्'–पृ० २–८।

२ प्रकरणपञ्चिका–पृ० ५१, तन्त्ररहस्यम्–पृ० ८।

१ प्रकरण पञ्चिका, पृ० ५५–५७

प्राभाकरमतेऽपि प्रत्यक्षस्य सविकल्पकनिर्विकल्पकभेदेन द्वौ प्रकारौ भवतः। भाट्टमते च नैयायिकानामिवैव पूर्वं तावन्निर्विकल्पक पश्चात् सविकल्पकं ज्ञानं भवति। भाट्टास्तावद् योगजप्रत्यक्ष न तावत् पृथड् मन्यन्ते। योगिप्रत्यक्षेऽपि ज्ञेयवस्तुनोऽस्तित्वमावश्यकवर्तते। योगिना परोक्षवस्तुज्ञान यद् भवति, तत् प्रातिभज्ञानमित्युच्यते, किन्त्वेतत्सन्दिग्धमिति सिद्धान्त ।

## अनुमान-प्रमाणम्

नैयायिका अन्वयव्यतिरेकि, केवलान्वयि केवलव्यतिरेकीतित्रेधाऽनुमान विभजन्ते। तत्र केवलव्यतिरेक्यनुमान मीमासकानामनभिमतम्। अत्र हि प्रकृतपक्षादन्यत्र अप्रसिद्धस्यैव पदार्थस्य साध्यत्व वक्तव्यम्। एतस्मिंश्च स्वीक्रियमाणे अदृष्टाद्यलौकिकार्थानामपि अनुमान विषयत्व प्रसज्येतेति विभ्यतो मीमासकास्तन्निरसने प्रयतन्ते।

## शब्दप्रमाणम्

ज्ञातशब्देन पदार्थस्य स्मरणात्मके ज्ञाने सति यद् वाक्यार्थज्ञानं भवति, तदेव शब्दप्रमाणमित्युच्यते। पौरुषेयाऽपौरुपेयभेदेन तदपि द्विप्रकारकम्। यथार्थद्रष्टा-वक्ता च आप्त उच्यते, तदुच्चरित वाक्य पौरुषेय, वेदप्रतिपादित वाक्यन्त्वपौरु-षेयम्। शब्दस्य पुनरपि द्वौ भेदौ, एक सिद्धार्थ, अपरो विधायक । निश्चितार्थ प्रतिपादक वाक्य सिद्धार्थवाक्यम्, किञ्चित्कार्यविषयकप्रेरणाप्रतिपादक वाक्य विधायक वाक्यम्। विधायक पुनर्द्विविधम् उपदेशकमतिदेशकञ्च । धर्मस्य व्याख्या-नार्थमेव मीमासादर्शनम्। धर्मं ज्ञापयितु वेदात्मकोऽपौरुपेय शब्द एव प्रमाणम्। वेदस्य नित्यत्वमदुष्टत्वञ्च प्रमाणयितुं शब्दस्य नित्यत्वावगम आवश्यक । शब्दस्य अर्थ एव शब्दार्थयो. सम्बन्धश्चापि नित्यः। अपौरुपेयवाक्यमवलम्ब्यैवाय विचारो मीमासादर्शने विहितोऽस्ति। लौकिकवाक्येषु विविधदोषसंभवेन नायं विचारो लौकिकवाक्यानि विषयीकरोति। अतएव वेदवाक्यानि पौरुपेयाणि नाऽभ्युपगम्यन्ते। तेषा पौरुपेयत्वाभ्युपगमे तेष्वपि दोपशंकाऽवकाश सभवेत्। अतो वेदा अपौरुषेया, न केनापि विरचिता, स्वप्रकाशास्ते।

वेदमन्त्रेषु यत्र क्वचित् केषाञ्चिन्नामानि उपलभ्यन्ते तानि मन्त्ररचयितॄणा न मन्तव्यानि, तानि तेषा नामानि सन्ति येषु तेजोरूपेण मन्त्रा आविर्भूता । ते एव तत्तन्मन्त्राणा विशिष्टज्ञातारोऽभूवन्। अतएव तत्तन्मन्त्रै सह तत्तदृषीणा नामानि सम्बद्धानि। तेन ऋषयो मन्त्रद्रष्टार इत्युच्यन्ते। वैदिकवाक्यानामर्थास्तत्सम्बद्धप्रसङ्ग

मनुलक्षीकृत्यैव कर्तव्या भवन्ति। यदि नाम प्रसङ्ग त्रिच्छिद्य वेदवाक्यार्थ क्रियते, अवास्तविक स खलु भवेत्।

प्राभाकरमते शब्दविज्ञानेन परोक्षभूतविषयस्य यज्ज्ञान तदेव शब्दप्रमाण शास्त्र वेत्युच्यते। शब्दविज्ञानद्वारा आत्मन सन्निकर्षेण अदृष्टविषयाणा यज्ज्ञान तच्छब्दप्रमाणमिति यावत्।

प्रभाकरस्यायमभिप्राय —वेदवाक्यादेव यथार्थतया शब्दज्ञान भवितुमर्हति। अतो वेद एवैक शब्दप्रमाणम्। वेदवाक्येष्वपि यानि विध्यर्थकानि तान्येव शब्द-प्रमाण-पदवीमधिरोहन्ति। यथा—'स्वर्गकामो यजेत।'

इदन्तावदत्रावधेयम्—अस्माभि श्रोत्रद्वारा शब्दरूपेण श्रूयमाणो यो ध्वनि स नित्यस्य शब्दस्य प्रतीकरूप। ध्वनि स्वयमनित्य, स च शब्दात् भिन्न। यदि ध्वनिरेव शब्दश्चेत् एकस्यैव शब्दस्य दशकृत्व उच्चारणे दशसख्याकाना शब्दाना ज्ञानेन भवितव्यम्, किन्तु न तथाऽनुभूयते। नैकवार कृतेप्युच्चारणे एकस्यैव शब्दस्य बोधो भवति, नानेकेषाम्। अतोऽभ्युपगन्तव्य भवति, उच्चारणे कृते ध्वनिरुत्पद्यते, न शब्द। तस्माच्छब्दो नित्य इति सिद्ध्यति। तथैव शब्देन सह अर्थस्य सबन्धोऽपि नित्य। सत्यप्यस्मिन् न कदापीद विस्मरणीय यन्मीमासा-दर्शने वैदिकशब्दानामथ च वैदिकवाक्यानामेव विशेषतया विचार कृतोऽस्ति। इमे शब्दा अपौरुषेया एव नित्याश्च सन्ति। एषा प्रामाण्यसिद्ध्यर्थ न परापेक्षा भवति, अपितु प्रामाण्यमेषा स्वत सिद्धम्।

### उपमानप्रमाणम्

सादृश्यजन्य ज्ञानमुपमितिरित्युच्यते। अस्मिन् इन्द्रियेण सह अर्थस्य सन्निकर्षो न भवति। पूर्वदृष्टे अर्थे स्मर्यमाणे दृश्यमानार्थसादृश्यज्ञानमुपमितिरितियावत्। यथा गवये गोसादृश्यदर्शनानन्तर स्मर्यमाणे गवि गवयसादृश्यज्ञानम्। तत्करण गवयपिण्डदर्शनमुपमानम्। नागरिको हि पुरुष नगरे दृष्टगु कदाचिदरण्यगतस्तत्र गवय पश्यति, तदा तद्गतसादृश्य प्रत्यक्षेण अवगच्छति, अनन्तर समानसवित्सवे-द्यतया गवयसादृश्य गोनिष्ठ स्मरति एतद्गवयसदृशी मदीया गौरिति, सैवोपमिति। अत्र सादृश्यस्य प्रत्यक्ष तथा गो स्मरण च भवति। अनयोर्द्वयोरेकत्र ज्ञान न प्रत्यक्षेण, नापि स्मरणेन च सभवितुमर्हति। अत उपमानप्रमाण पृथक् अगीकर्तव्य भवति।[१] प्रभाकरमते सादृश्यद्वारा अदृष्टवस्तुविषयक ज्ञानमुपमानम् यथा पूर्व-

---

१ श्लोकवार्तिकम्, उपमानप्रकरणम् ३७-४३।

दृष्टगो पुरुषस्य वने तत्सदृशं गवय पश्यतो यत् . गोनिष्ठ गवयप्रतियोगिकसादृश्यज्ञानम् अनेन सदृशी मदीया गौरिति तदुपमानम्, अर्थात् सादृश्यस्य प्रत्यक्षेण अविद्यमानगोनिष्ठ यद् गवयसादृश्यज्ञान भवति तदेवोपमान कथ्यते । भाट्टमते तावत् अविद्यमानाया गो स्मरणमेवोपमानम् । प्रभाकरमते च अविद्यमानाया गवि सादृश्यज्ञानमेवोपमानमिति द्वयोरुपमानस्वरूपभेद प्रतीयते ।

नैयायिकास्तु 'गोसदृशे गवय' इति आरण्यकपुरुषवाक्य श्रुत्वा कदाचित् अरण्य गत तत्र गवय पश्यन् तस्मिन् गोसादृश्यमवगच्छति, अनन्तरम् आरण्यक–वाक्यस्य अर्थं स्मरति, ततश्च 'गवयो गवयपदवाच्य, इति ज्ञान तस्य जायते । तत्र गवयो गवयपदवाच्य इत्युपमिति । आरण्यकवाक्यार्थस्मरणमवान्तरव्यापार, गवयगतगोसादृश्यज्ञानमुपमानमिति वदन्ति ।

## अर्थापत्तिप्रमाणम्

दृष्टस्य श्रुतस्य वा विषयस्योपपत्तिर्यदर्थकल्पनमन्तरेण न भवति, तदर्थकल्पनमर्थापत्ति । यथा प्रमाणान्तरेण 'देवदत्तो दिवा न भुङ्क्ते तथापि पुष्टो वर्तते' अत्र अभुक्तेऽपि पीनता' इति कथने समन्वयो नोपपद्यते, तदुपपत्तये 'रात्रौ भुङ्क्ते इति कल्पना क्रियते । तेन स्पष्टमिदमवगम्यते—दिवा यद्यपि स न भुङ्क्ते तथापि स रात्राववश्य भुङ्क्ते, अतएव स पुष्ट प्रतीयते । अत्र प्रथमवाक्यस्योपपत्त्यर्थ 'रात्रौ भुङ्क्ते' इति कल्प्यते — इयमेवार्थापत्तिरित्युच्यते । इयमर्थापत्तिर्द्विविधा—दृष्टार्थापत्ति श्रुतार्थापत्तिश्च । दृष्टार्थापत्तेरुदाहरणमुपरि निर्दिष्टमेव । श्रुतार्थापत्तेरुदाहरणम्—'जीवीदेवदत्तो गृहे नास्ति । इत्यनेन 'देवदत्त कुत्रचिदन्यत्र वर्तते' इति कल्पनमर्थापत्ति । अन्यथा देवदत्तस्यजीवित्व गृहेऽनवस्थानञ्चेत्यनयो. समन्वयो नोपपद्यते ।

प्रभाकरमते—येन केनापि प्रमाणेन ज्ञातविषयस्योपपत्तये अर्थापत्ति. सभवितुमर्हति । केवल दृष्टेन श्रुतेनैव वा न । इत्थ विरुद्धयो समन्वय प्रत्यक्षादिप्रमाणैर्न संभवति । अतोऽर्थापत्ति पृथगेव प्रमाणान्तरम् । अर्थस्यैवात्र कल्पनीयतया शब्दकल्पनाभावात् श्रुतार्थापत्तिर्नानुमता प्राभाकरै ।

## अभावप्रमाणम्

अनुपलब्धिरभावस्यार्थान्तरम् । अनुपलब्धिर्नाम उपलब्धेरभाव । प्रवृत्तियोग्याना पञ्चानापि प्रत्यक्षादीना प्रमाणाना यत्रावृत्ति, सा योग्यानुपलब्धिर्नाम अभावरूप षष्ठ प्रमाण घटाद्यभावविषयक भवति ।

न हि स इन्द्रियेण गृह्यते इन्द्रियव्यापाराभावेऽपि तदुदयात् । यो हि प्रात गृहेऽवस्थित मध्याह्ने पृच्छयते—किमस्मिन् गृहे प्रात कश्चित् श्यामो लोहिताक्षो ऽवलोकित ? स तदानीमेव योग्यस्मरणानुदयात् तस्याभावं प्रात कालिकमिन्द्रिय-व्यापार विनैव निश्चिनोति । अतो नेन्द्रियकरणक तज्ज्ञानम् । नाप्यनुमेयम्, लिङ्ग-लिङ्गिनो सम्बन्धग्रहादेरभावात् । नापि चोपमानादे प्रवृत्ति , तद्धेतो सादृश्यज्ञाना-देरभावात् । अत अवश्य प्रमाणान्तरभूतया अनुपलब्ध्यैव अभावस्तादृश — प्रत्येतव्य इति सिद्ध षष्ठ प्रमाणत्वमभावविषयकत्वञ्चाभावस्य प्रमाणस्य ।

प्रभाकरमते—अभावाख्य वस्तु एव नास्ति । या तु अभावप्रतीति सा भूतल प्रतीतेर्नातिरिच्यते । अतो भूतलातिरिक्तस्य कस्यचिदभावात् न तद्ग्रहणाय अभावापरपर्याय अनुपलब्ध्याख्य प्रमाणं स्वीकर्त्तव्यम् इति वदन्ति प्राभाकराः ।

एव भाट्टमते प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यनुपलब्ध्याख्यानि षट् प्रमाणानि । प्रभाकरमते च प्रत्यक्षाऽनुमानशब्दोपमानार्थापत्त्याख्यानि पञ्च प्रमाणानि निरू-पितानि ।



# सांख्ये प्रमाणतत्त्वम्

पण्डित श्री केदारनाथ त्रिपाठी
दर्शन-विभागाध्यक्ष, प्राच्यविद्याधर्मविज्ञानसकाये,
काशी-हिन्दू-विश्वविद्यालये

यद्यपि लोके हि प्रमाणशास्त्रत्वेन न्यायशास्त्रमेव व्यपदिश्यते विद्वद्भि । तथापि प्रमाणाविनाभावसिद्धिकतया प्रमेयाणा सर्व एव दार्शनिका स्वस्वाभिमत प्रमेयसाधनानुगुणानि प्रमाणानि वर्णयाञ्चक्रु । तत्र प्रमाकरणत्वं प्रमितिकरणत्वं वा प्रमाणत्वमिति सर्वतन्त्रसिद्धान्त , प्रमीयतेऽनेनेति प्रमाणपदनिर्वचनात् । तदुक्तं न्यायभाष्ये वात्स्यायनमुनिना—प्रमाणमन्तरेण नार्थप्रतिपत्ति, प्रमाता येनार्थं प्रमिणोति तत् प्रमाणमिति । ईदृगमेव वैशेपिकाणामपि प्रमाणम् । अगृहीत-ग्राहित्व प्रमाणत्वमिति मीमासका । तथा चाह—कुमारिलभट्ट—अनधिगत-भूतार्थनिश्चायक प्रमाणमिति । एतच्चौत्पत्तिकसूत्रे—"अर्थेऽनुपलब्धे तत्प्रमाण-मिति वदता जैमिनिमुनिना सूचितम् । स्वापूर्वार्थव्यवसायात्मकं ज्ञान प्रमाणमिति जैनाचार्या. ( परीक्षामुखम् ) । अनधिगतविपय प्रमाणमिति बौद्धा ( न्याय-बिन्दु )। द्वयोरेकतरस्य वाप्यसनिकृष्टार्थपरिच्छित्ति. प्रमा, तत् साधकतम यत्तत् त्रिविध प्रमाणमिति साख्याचार्या । योगदर्शनस्यापीदमेव सम्मतम् । एपु विचारेपु प्रमा पौरुपेयबोधरूपा भवेत् बुद्धिवृत्तिरूपा वा भवेत् अन्या वा भवेत्, सर्वथापि तु प्रमीयतेऽनेनेति समाख्यानिर्वचनात् प्रमाकरणत्वं प्रमाणत्व न क्वचिद् व्यभिचरतीति सर्वतन्त्रसिद्धान्तत्वमस्य स्फुटीभवति ।

प्रमाणविशेपविचारप्रसङ्गे तु प्रत्यक्षमेवैकं प्रमाणमिति चार्वाका , प्रत्यक्षमनु-मानञ्चेति प्रमाणद्वयमिति काणादसौगता , प्रत्यक्षं परोक्षञ्चेति द्वे मूलप्रमाणे इति जैनसम्प्रदाय , प्रत्यक्षमनुमान शब्दश्चेति त्रीणि प्रमाणानि सन्तीति साख्या-चार्या , प्रत्यक्षानुमानोपमानशब्दा प्रमाणानीति नैयायिका , प्रत्यक्षानुमानोपमान-शब्दा अर्थापत्तिश्चेति पञ्च प्रमाणानीति प्राभाकरा तानि चानुपलब्धिश्चेति पट् प्रमाणानीति भाट्टा वेदान्तिनश्च मन्यन्ते एतानि पट्संभव ऐतिह्यञ्चेत्यष्टौ प्रमाणानीति पौराणिका प्रणिगदन्ति । केचित्तु चेष्टामपि नवम प्रमाणमाहु. ।

इत्थञ्च विभिन्नमतानुसार प्रमाणविशेषान् संक्षेपेणोद्दिश्य प्रस्तुते निबन्धे साख्यदृष्ट्या सामान्यत प्रमाणतत्त्व तावद् विचार्यते ।

तत्र "द्वयोरेकतरस्य वा ऽप्यसनिकृष्टार्थपरिच्छित्ति प्रमा, तत्साधकतम यत्तत् त्रिविध प्रमाणम्, ( सा० द० प्र० अ० सू० ८७ ) इति प्रमाणसामान्य लक्षित सूत्रकारै । व्याख्यातञ्च तद् विज्ञानभिक्षुणा—असन्निकृष्ट प्रमातर्यनारूढो ऽनधिगत इति यावत् । एवम्भूतस्यार्थस्य वस्तुन परिच्छित्तिरवधारण प्रमा । सा च बुद्धिपुरुषयोरुभयोरेव धर्मो भवतु, किं वैकतरस्य, उभयथैव तस्या प्रमाया यत् साधकतम फलायोगव्यवच्छिन्न कारण तत्प्रमाणमिति । अत्र अनधिगतार्थकम् असन्निकृष्टपद स्मृते प्रामाण्यव्यावर्तनात्, तस्या अधिगतविषयत्वात् । भ्रम-व्यावर्तनाय वस्तुबोधकमर्थपदम्, सशयव्यावर्त्तनाय चावधारणसूचक चावधारणार्थसूचक परिच्छित्तिपदम् । एवं द्वयोरेकतरस्य वेति पदैरिद सूचित भवति यत् प्रमारूप प्रमाणफल केवलाया बुद्धौ, केवले पुरुषे, उभयोर्वा वक्तु शक्यते । यदा प्रमाफल पुरुषनिष्ठमात्रमुच्यते तदा बुद्धिवृत्तिरेव प्रमाण भवति । यदा तु बुद्धिनिष्ठमात्रमुच्यते तदा इन्द्रियसनिकर्षादिरेव प्रमाणम्, बुद्धि-निष्ठा वृत्तिश्च प्रमा भवति । अस्मिन् पक्षे पुरुषो बुद्धिगताया वृत्तिरूपप्रमाया साक्ष्येव भवति न तु प्रमातेति । यदि च तृतीय पक्षानुसार पौरुषेयो बोधो बुद्धि गता वृत्तिश्चेत्येतद्द्वयमपि प्रमा उच्यते, तदा तु पौरुषेयबोधरूपप्रमादृष्ट्या बुद्धिवृत्ति प्रमाण भवति, बुद्धिवृत्तिरूपप्रमा । दृष्ट्या च इन्द्रियसन्निकर्ष एव प्रमाणमिति । चक्षुरादिषु च प्रमाणव्यवहारो लौकिकाना गौणएव न तु मुख्य-इति मन्तव्यम् ।

तथापि प्रश्नोऽयमवशिष्यते यत् प्रमारूपफलसम्बन्धे ये पूर्वोक्तास्त्रय पक्षा' सूत्रे समुट्टङ्कितास्तेषु क पक्षो मुख्यतया सूत्रकाराभिमत इति । यद्यप्यस्य प्रश्नस्य साख्यसूत्रेषु न किमप्युत्तर स्फुटतयोपलभ्यते तथापि एतत्समानतन्त्रस्य पातञ्जल-योगदर्शनस्य भाष्ये व्यासदेवै "पुरुषनिष्ठबोध प्रमा" इत्युक्तत्वात् प्रमारूप फल पुरुषस्यैव धर्म इत्ययमेवास्यापि दर्शनस्य मुख्य सिद्धान्त इति प्रतीयते । अयमेव पक्ष औचित्यमप्यावहति । यतो हि पुरुषार्थमेव करणाना प्रवृत्तिस्तदा प्रवृत्तिफलेनापि पुरुष-निष्ठेनैव भवितव्यम् । अतो वस्तुगत्या पौरुषेयो बोध एव प्रमा, तज्जनिका बुद्धिवृत्तिश्च प्रमाणम्, इन्द्रिय-सन्निकर्षादयस्तु तदुपकरणानीति साख्यसिद्धान्त । तदुक्त वाचस्पतिमिश्रैरपि साख्य-तत्त्वकौमुद्याम्—

"उपात्तविषयाणामिन्द्रियाणा वृत्तौ सत्या बुद्धेस्तमोऽभिभवे सति य सत्त्व

समुद्रेकः, सोऽध्यवसाय इति, वृत्तिरिति, ज्ञानमिति चाख्यायते । इदं तत् प्रमाणम् । अनेन यश्चेतनाशक्तेरनुग्रह तत्फलं प्रमाबोध इति ।"

यद्यपि वचनमिद प्रत्यक्षविषयकं तथापि उपलक्षणतया प्रमाणान्तरेऽपीयमेव रीति. स्वीकरणीया।

वृत्तितत्फलीभूतप्रमा ( बोध ) जननादौ साख्यप्रक्रिया तु तन्त्रान्तर-प्रक्रियात· सर्वथा विलक्षणा हृत्तलस्पर्शिनी चास्तीति विज्ञानभिक्षुमावृत्य निवेदयाम· ।

प्रत्यक्षे इन्द्रियप्रणालिकया पूर्वं बुद्धिरर्थसन्निकृष्टा जायते ततश्च तस्या अर्थाकारा प्रत्यक्षा वृत्तिजयिते। सा च वृत्तिर्न केवलबुद्ध्याश्रिता, किन्तु इन्द्रियविशिष्ट-बुद्ध्याश्रिता भवति। अत एव पित्तादिदोषदूषितनयनदशायां जायमाना शङ्खाकारा वत्तिर्नयनगतपित्तादिसमाश्रयेणैव पित्ताद्याकारा जायते। अन्यथा बुद्धिशङ्खयोरु-भयोरपि अपीतत्वेन कथ पीतशङ्खाकारा वृत्ति र्जायते। अत एव पित्तेन दूने रसने सिताऽपि तिक्तायमानाऽनुभूयते। अयमेव न्याय इन्द्रियान्तरविषयेष्वपि योजनीय ।

अर्थोपरक्ता सा च वृत्ति प्रतिविम्बभावेन पुरुषमारूढा सती भासमाना प्रमा इति पौरुषेयो बोध इति चाख्यायते। पुरुषेऽर्थोपरक्तबुद्धिवृत्ते प्रतिविम्बस्वी-कारोऽप्यावश्यक , अन्यथा पुरुषस्यापरिणामित्वेन बुद्धिवत् स्वतोऽर्थाकारत्वासभवात् पुरुषेऽर्थबोधो न स्यात् अर्थाकारतैव हि अर्थभान न तु ततोऽन्यत्, दुर्वचत्वात्। अत परिणामिनी बुद्धि स्वतएवार्थाकारतामापद्यमाना घटादिवृत्तिमती भवति। पुरुषस्तु अपरिणामितया स्वतो नार्थाकारता धारयति, किन्तु अर्थाकारबुद्धिवृत्तेस्तत्र प्रतिविम्बनेन पुरुषेऽप्यर्थाकारताभिमानो भवति, यथा च मुखप्रतिविम्बनेन दर्पणोऽपि मुखाकारता धारयतीव ।

इत्थञ्च प्रतिविम्बमाध्यमेन अर्थाकारतारूपमर्थग्रहण पुरुषेऽपि सम्यगुपपद्यत इति। इयमेवार्थबोधप्रक्रिया "वृत्तिसारूप्यमितरत्र" इति योगसूत्रेणापि समर्थिता, तत्र सारूप्यपदेन प्रतिविम्बनस्यैव ध्वननादिति ।

स्मृतिरप्यस्मिन्नर्थे प्रमाण भवति। तथाहि—

"तस्मिश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टय ।
इमास्ता· प्रतिविम्बन्ति सरसीव तटद्रुमा." ॥ इति ।

"बुद्धे· प्रतिसवेदी पुरुष इति योगभाष्यवचनमपि तमेवार्थमुपोद्वलयति। यथा हि प्रतिध्वनिशब्दः पूर्वध्वन्यनुरूपिण ध्वनिं बोधयति तथैव प्रतिसवेदशब्दोऽपि

पूर्वमवेदनस्य प्रतिविम्बन वोधयति। तस्यैव च प्रतिविम्बस्याश्रय पुरुष इति भाष्य-वाक्याशय। इदमेव च बुद्धिपुरुपयोरर्थग्रहणेऽन्तर यदेका वस्तुतोऽर्थाकारतामापद्यतेऽपरश्च प्रतिविम्वाश्रयेणार्थाकारता धारयतीव। अतएव यत्रातीन्द्रियादिस्थले वुद्धिनर्थाकारता धारयति तत्रार्थेन सह सयोगे सत्यपि सा नार्थं गृह्णातीति।

न च वृत्त्यनारूढ एवार्थ साक्षात् पुरुषे कथ न प्रतिविम्बते? कथन्तराञ्च वृत्तिरपि निराकाराऽर्थानुपरक्ता पुरुषे न प्रतिविम्बते? कथन्तमाञ्च परकीया वुद्धिवृत्तिर्न परात्मनि प्रतिविम्बत इति वाच्यम्, अर्थोपरक्ताना स्वस्ववुद्धिवृत्तीनामेव प्रतिविम्वार्पणसामर्थ्यमिति फलबलात् कल्प्यते। यथा रूपवतामेव जलादिषु प्रतिविम्बनसामर्थ्य नेतरस्येति। जलादिगतश्चन्द्रादिप्रतिविम्वोऽपि च वुद्धेरेव विम्बाकार परिणामविशेषो न तु वस्तुतश्चन्द्रस्तत्र परिणमत इति वोध्यम्।

केचिदाचार्या प्रतिपादयन्ति—वृत्तौ प्रतिविम्बत सदेव चैतन्य वृत्ति प्रकाशयति, तथा वृत्तिगतप्रतिविम्व एव वृत्तौ चैतन्यविषयता, न तु चैतन्ये वृत्तिप्रतिम्विम्वो ऽस्तीति। वाचस्पतिमिश्रा अप्येवमेवाहुरिति। किन्तु विज्ञानभिक्षुर्नैतत् सम्मनुते। उपदर्शितशास्त्रविरोधेन केवलतर्कस्याप्रयोजकत्वात्। विनिगमकप्रमाणाभावेन वृत्तिचैतन्योरुभयोरपि अन्योन्यस्मिन्नन्योन्यप्रतिविम्वसिद्धेश्चेति।

एवञ्च वाह्यस्थलेऽर्थाकारतैव विषयतानिरूपिकेति सिद्धौ आन्तरेऽप्यर्थाकारताया एव विपयग्रहणस्वरूपत्वौचित्यात् अहमित्याकारकस्वभावसम्पत्त्यर्थम् अहमाकारवृत्तेरपि चैतन्ये प्रतिविम्व स्वीकरणीय। किन्तु स्वस्य स्वस्मिन् प्रतिविम्वासभवात् पूर्व बुद्धौ चैतन्यस्य प्रतिविम्वस्वीकार आवश्यक। पुनश्च पुरुप-प्रतिविम्वान्विता वुद्धि पुरुपे प्रतिविम्वते, यथा च मुखप्रतिविम्वान्वितो दर्पण पुनर्दर्पणान्ते प्रतिविम्वते, तद्वत्। तथा च प्रतिबिम्वद्वारा घटादिविपयवोध इव अहमिति स्ववोवोऽपि पुरुपे समुपपद्यत इति वुद्धिचैतन्ययो परस्परं प्रतिविम्व सिध्यति।

अयमाशय—यथा दर्पणे पूर्वं मुखं प्रतिविम्वते, पश्चाच्च तदेव प्रतिविम्वित मुख मुखप्रतिविम्वो वा घटपटादिवाह्यवस्तुवत् भासेत, तथैव सयोग-विशेपात् चैतन्य वुद्धौ प्रतिविम्वते, प्रतिविम्वनेन च वुद्धिश्चैतन्याकारा जायते, तथा च दर्पणो मुखाकारो भवति। अनन्तर स एव वुद्धिगतश्चैतन्यप्रतिविम्वो ऽहमित्याकारेण घटपटादिविपयवत् पुरुपे भासते। अयञ्च चैतन्य-प्रतिविम्वश्चैतन्य भावार्य कल्प्यते। अन्यथा कर्मकर्त्त-विरोधेन स्वस्य साक्षात् स्वय दर्शन नोपपद्येत।

अयमेव चित्प्रतिबिम्बो बुद्धौ चिच्छायापत्तिरिति चैतन्याध्यास इति चिदावेश इति च
चोच्यते ।

यश्च बुद्धेश्चैतन्ये प्रतिबिम्ब स चारूढविषयै सह बुद्धेर्भानार्थमिष्यते । यथैव बुद्धिरर्थाकारता धारयन्त्येवार्थं गृह्णाति तथैव पुरुषोऽपि प्रतिबिम्बमाध्यमेनार्थाकारता धारयन्त्येवार्थं गृह्णाति । उभयोरर्थाकारतायामयमेव भेदो यद् बुद्धौ वास्तविकपरिणामेनार्थाकारो भवति, पुरुषे तु परिणामासभवेन प्रतिबिम्बरूप एवार्थाकार. पर्यवसितो भवतीति । अस्मिंश्च मुख्ये सिद्धान्ते ज्ञातृत्व पुरुष एव, बुद्धिस्तु केवलं वृत्तिरूपप्रमाणप्रयोजिकेति मन्तव्यम् । बुद्धेरेव ज्ञातृत्वे तु "चिदवसानो भोग" इति साख्यसूत्र-विरोध स्यात् ।

अस्य सूत्रस्यायमर्थ —चिति = पुरुषस्वरूपे चैतन्ये पर्यवसान यस्यैतादृशो भोगः = प्रमाणस्य फलभूता प्रमात्मिका सिद्धिर्भवतीति । बुद्धेर्भोग व्यावर्तयितु चिदवसान इति पदम् । अत्रावसानपदमपि चिते परिणामित्वादिशङ्कानिरासाय दत्तम् । अर्थात् चिद्गतस्य भोगस्य चैतन्यस्वरूपे पर्यवसानात् न तत्र कौटस्थ्यमपि हीयते । तथा च प्रमाणाख्यवृत्त्यारूढ प्रकृतिपुरुषादिक प्रमेय वृत्त्या सह पुरुषे प्रतिबिम्बित सद् भासते । ततश्चार्थोपरक्तवृत्तिप्रतिबिम्बावच्छिन्न स्वरूपचैतन्यमेव पुरुषस्य भोग प्रमाणस्य च फलम् । अत. पुरुषे प्रतिबिम्बरूपेण जायमानेऽर्थसम्बन्धे वृत्तयएव द्वारीभूता सन्तीति करणत्वेन तासा प्रमाणत्वमुपपद्यते । इयमेव रीति· शब्दानुमानाभ्या प्रमाणाभ्यामपि जायमानयो शाब्दानुमितिप्रमयोरप्यनुसरणीया ।

साख्यसूत्रे साख्यकारिकायाञ्च प्रमाणमित्येकवचननिर्देशात् इद गम्यते यत् करणल्युटा निष्पन्न प्रमाणपदं प्रमाकरणतया यद् गमयति, तदेकमेव, न तु तन्त्रान्तर इव नाना । शास्त्रेऽस्मिन् बुद्धेरेकत्वाभ्युपगमात् । उपाधिवशादेव तु प्रत्यक्ष मनुमानमाप्तवचनमिति भेद आश्रीयते । अत सूत्रकारिकयोरुपाधिकृत भेदमनाश्रित्यैव प्रमेयपरिच्छेदकत्वसामान्यमङ्गी कृत्यैकवचननिर्देश क्रियते प्रमाणमिति प्रमाणादिति च ।" तथा चैकमेव बुद्धिलक्षण सत्त्वमिन्द्रियसन्निकर्षव्याप्तिज्ञानादि निमित्तान्तरानुग्रहजनिताभि कार्यविशेषदर्शनावगतस्वरूपभेदाभिर्नानाशक्तिभिरुपकारात् भिन्नमिवावभासमानं दृष्टानुमानाप्रवचनशब्दवाच्य भवति, न तु तन्त्रान्तरीयाणामिव साख्याना स्वतन्त्राणि त्रीणि प्रमाणानि भवन्ति । अत शक्तिभेदादेव प्रमाणस्य त्रैविध्योपचार इति साख्यमतम् ।

एव तावत् साख्यमतमनुसृत्य प्रमाणसामान्य निरूपितमुद्देशलक्षणपरीक्षाभि ।

प्रमाणविशेषविमर्शस्तु तन्त्रान्तरेष्विवेहापि समानएव कृत इति न प्रतन्यते ।

एतावास्तु विशेषः—वैशेषिका बौद्धाश्च प्रत्यक्षानुमानयोर्द्वयोरेवेतराणि षट् प्रमाणान्यन्तर्भावयन्ति । नैयायिका प्रत्यक्षानुमानोपमानशब्देषु चतुष्प्रमाणेषु इतराण्यर्थापत्त्यनुपलब्धिसम्भवैतिह्याख्यानि चत्वारि अन्तर्भावयन्ति । साख्याचार्यास्तु प्रत्यक्षानुमानाप्तवचनेष्वेव सर्वाणीतराणि समावेशयन्ति । अन्तर्भावप्रकारस्तु प्राय समान एवेत्यल विस्तरेण ।



# योगदर्शने प्रमाणवादः

सुश्री कु० विमला कर्नाटक, एम० ए०, विद्यालंकार, रिसर्च स्कालर।
का० हि० विश्वविद्यालये

पातञ्जलयोगदर्शने चित्तस्य परिणामरूपा वृत्तय पञ्चविधा स्वीकृता सन्ति। ताश्च प्रमाणविपर्ययविकल्पनिद्रास्मृतीतिनामभिर्व्यवह्रियन्ते। अत्र वृत्तिपदस्य ज्ञानसामान्यमर्थ। किन्तु प्रमात्मकज्ञानस्योत्पत्ति प्रमाणवृत्तेरेव सभवति। प्रत्यक्ष-प्रमाऽनुमितिप्रमाशाब्दप्रमेतिस्वरूपभेदेन प्रमाज्ञानं त्रिविधम्। तेन प्रमाया कारण-मपि त्रिविधम्। तथाहि—प्रत्यक्षप्रमाणम्, अनुमानप्रमाण शब्दप्रमाणञ्चेति। प्रमीयतेऽनेन तत् प्रमाणमिति व्युत्पत्त्या प्रमाज्ञान यस्मादुत्पद्यते तत् प्रमाणमिति कथ्यते। एव प्रमास्वरूपं पौरुषेयबोध एव। स च अनधिगताबाधितार्थविषयको भवति। ज्ञानोत्पत्त्यर्थं योगदर्शने प्रदर्शितप्रकार अन्यशास्त्रेभ्यो भिन्न.। योग-शास्त्रानुसारेण पौरुषेयबोधो (प्रमाज्ञानम्) बुद्धिवृत्त्याख्यप्रमाणेनोत्पद्यते। सा च बुद्धिवृत्ति इन्द्रियार्थसन्निकर्षलिङ्गज्ञानपदज्ञानाना परिणाम एव।

प्रत्यक्षप्रमाणवृत्ति

यथा तडागस्थित जल नालिकया क्षेत्रेषु गत्वा केदाराकारेण परिणमति तथैव प्रत्यक्षादिज्ञानेषु चित्तमपीन्द्रियप्रणालिकया चक्षु सन्निकृष्टबाह्यविषयै सह सबध्नाति तेन विषयोपरक्त चित्त विषयाकारेण परिणत भवति। चित्तस्येय विषयाकारतैव प्रत्यक्षप्रमाणमिति शब्देनोच्यते। प्रत्यक्षात्मिका चित्तवृत्ति सामान्यविशेषात्मक-पदार्थगतं विशेषांशमेव प्राधान्येन गृह्णाति। प्रत्यक्षप्रमाणेन भूयमाना प्रत्यक्षप्रज्ञा पौरुषेयबोध इति शब्देनोच्यते। घटादिविषयमहं जानामीति तत् स्वरूपमवगन्तव्यम् पौरुषेयबोधसम्बन्धे योगशास्त्रकृता पृथक् पृथग् विचारा उपलभ्यन्ते। तत्र श्रीवाच-स्पतिमिश्ररामानन्दयतिनारायणतीर्थसदाशिवेन्द्रसरस्वतीबलदेवमिश्राद्याचार्याणामय-मभिप्राय—यथा निर्मले दर्पणे प्रकाशेनालोकिते प्रतिबिम्बग्राहिकाशक्ति विद्यते तथैव प्रकृतिगतसत्त्वांशसमुत्पन्नाया सात्त्विकविशुद्धबुद्धावपि व्यापकस्य चेतनस्य प्रतिबिम्बं सक्रमते। येन अचेतनापि बुद्धि चेतनवद् भवन्ती उपरिनिर्दि-

बोधात्मक द्वितीयं ज्ञान प्रमारूपं भवति। इन्द्रियाणि तु बुद्धिबोधं प्रति साक्षात् कारणानि भवन्ति। अतस्तानि पौरुषेयबोधं प्रति परपरया कारणानि भवन्ति, न साक्षात्।

अनुमानप्रमाणवृत्ति.

अनुमानप्रमाण तावद् व्याप्तिमूलकं भवति। पदार्थद्वयस्य नियतसम्बन्धः व्याप्तिशब्देनोच्यते। यथा अग्निधूमयोः नियतसम्बन्धत्वात् व्याप्तिरिति व्यवह्रियते। यत रसवत्या धूमे सत्वे अग्न्यभावः न कस्यापि दृष्टिपथमागत। अत धूमाग्न्योर्व्याप्तिसम्बन्धं जानान पुरुष यदा दूरादेव पर्वतादावविच्छिन्नमूला धूमरेखामवलोकयति, तदा तस्य पुरुषस्य "अय पर्वतो वह्निमान्" इत्याकारिका चित्तवृत्ति उदेति, या अनुमानप्रमाणमिति व्यपदिश्यते। एवंभूतस्य चित्तवृत्तिविशिष्टस्य पुरुषस्य "अहं वह्निमनुमिनोमि" इत्याकारक ज्ञान भवति, यदनुमितिप्रमा शब्देनोच्यते। पर्वतादिपक्षे वर्तमानस्याग्न्यादिसाध्यस्य सामान्यतया ज्ञानमनुमानप्रमाणेन भवति। अतोऽनुमानं सामान्यावधारणप्रधानावृत्तिरित्युच्यते। न्यायदर्शने तु व्याप्तिज्ञान प्रमाणशब्देन, पर्वतो वह्निमानिति व्यवसायात्मक ज्ञानमनुमितिशब्देन, तथा वह्निमनुमिनोमीत्यनुव्यवसायात्मक ज्ञानमनुमितिप्रमाशब्देन व्यपदिश्यते.

अन्वयव्याप्तिव्यतिरेकव्याप्तिभेदेन व्याप्तिर्द्विविधा भवति। यथा नक्षत्राणि गतिमन्ति, अन्यदेशदर्शनात्, मनुष्यवत्, अथ च विन्ध्याचल गतिमत्वाभाववान् अन्यत्रादर्शनात् इत्याभ्यामुदाहरणाभ्यामन्वयव्यतिरेकव्याप्तिस्वरूप स्पष्ट भवति।

पूर्ववत्शेषवत्सामान्यतोदृष्टभेदेन अनुमानमपि त्रिविध भवति। अत्र सिद्धान्तचन्द्रिकाकारो नारायणतीर्थ स्वाभिप्राय प्रकटयति यत् पूर्ववत् सज्ञकेऽनुमाने हेतु केवलान्वयी भवति यथा शब्द अभिधेय प्रमेयत्वात् घटवत्। अत्र शब्दे अभिधेयत्व साध्य वर्तते। तत्साधको हेतु प्रमेयत्वं विद्यते। स च केवलान्वयी हेतु। यत यदभिधेय न भवति तत् प्रमेयमपि न भवति इति व्यतिरेकव्याप्तौ दृष्टान्तो नोपलभ्यते। सर्वेष्वपि पदार्थेषु प्रमेयत्वस्य वर्तमानत्वात्। शेषवदाख्यानुमाने हेतु केवलव्यतिरेकी भवति। यथा पृथ्वी अन्यपदार्थेभ्यो भिन्ना गन्धवत्वात्। यत्र यत्र गन्धवत्व तत्र तत्र पृथ्वीत्वमिति यावत्। यथा पृथ्वीति व्यवहारो न भवति तत्र गन्धत्वहेतुरपि न भवति यथा जलम्। अत्र सकला पार्थिवपदार्था पक्षकोटयन्तर्गता भवन्ति। एवञ्च अन्वयव्याप्तौ दृष्टान्तोपलम्भेन च शेषवदाख्यानुमाने हेतु केवलव्यतिरेकी भवति। सामान्यतोदृष्टानुमानेचहेतुः अन्वय व्यतिरेकी

अभावप्रमासाधकस्य अनुपलब्धिप्रमाणस्यापि प्रत्यक्षप्रमाणे एव अन्तर्भावे अत' भाट्टैः वेदान्तिभिश्च तदभ्युपगमकरणमुधैव प्रतिभाति । अत्र पूर्वपक्षी विचिकित्सते प्रत्यक्षप्रमाणलक्षणानुरोधेन पदार्थेन सह इन्द्रियसन्निकर्प आवश्यको भवति । न हि त विना प्रत्यक्षज्ञान संभवति । किन्तु अभावेन सह इन्द्रियसन्निकर्ष कथं भवितु शक्य मूर्त्तत्वाभावात् । अत अभावज्ञानार्थं अनुपलब्धिप्रमाणाभ्युपगम आवश्यक. । तत्र योगाचार्यां इत्य समादधति । अभावपदार्थ भूतलस्वरूपात् नातिरिक्त । साख्ययोगदर्शने प्रकृतिमारम्य घटपटादिभूतपर्यन्ता सर्वे पदार्थास् त्रिगुणात्मका प्रतिक्षण परिणामिन सन्ति । भूतलमपि त्रिगुणात्मकमस्ति, तदपि च प्रतिक्षण परिणामि वर्तते । घटवत्तादशाया भूतल सद्वितीयत्वधर्मवद् भवति । घटाभावदशायाञ्च केवल भूतल इत्याकारकं कैवल्यधर्मवद् भवति । अतः अभावप्रतिपत्तये इद्रियार्थसन्निकर्षो नावश्यको भवति । यत परिणामिना भूतलेन सह इन्द्रियसम्बन्धस्य सत्त्वेन भूतलस्य परिणामविशेषेणाभावेन सहापि इन्द्रियसन्निकर्पो वर्तत एव । सूक्ष्मतया विचार्यमाणे सति अभावाख्य कोऽपि पदार्थ एव न भवति । यत भूतले घटाभाव इति प्रयोगे सति कैवल्यधर्मविशेषेण सहित भूतलम् इति पदार्थो भवति । अत तत् प्रतिपत्तये अनुपलब्धिप्रमाणस्य पृथक्त्वेन अङ्गीकारो नावश्यक । यत तस्य प्रत्यक्षान्तभू तत्वात् ।

'अस्मिन् वृक्षे यक्षस्तिष्ठति' इत्यादिजनश्रुतीना पौराणिकै' ऐतिह्यमिति प्रमाणत्वेन स्त्रीक्रियते । तदपि न युक्तियुक्तम् । यावन्ति ऐतिह्यवचनानि तानि यदि आप्तपुरुषोच्चारितानि भवन्ति तर्हि तेषामागमप्रमाणेऽन्तर्भावो भविष्यति । वस्तुत प्रवादपरम्परात्मकस्य ऐतिह्यवाक्यस्य उच्चारयितरि आप्तत्वनिश्चयाभावात् तत्र सन्देह एव स्थिरो भवति । अत ऐतिह्य न हि प्रमाणकोटिमाटीकते ।

अथ च पौराणिका सम्भवमपि स्वतन्त्र प्रमाण स्वीकुर्वन्ति । ते उद्घोषयन्ति— यत्र व्याप्यपदार्थस्य सत्तया व्यापकपदार्थस्य सत्ताया ज्ञान भवति, तत्र सम्भवप्रमाणस्यावकाशो भवति । यथा खारीप्रमाणे द्रोणाढकप्रस्थकुडवमुष्ट्याद्यल्पपरिमाणाना समावेशो भवत्येव । अत सम्भवाख्य पृथक् प्रमाणम् । खारीज्ञानेन द्रोणपरिमाणस्यापि ज्ञान सम्भवप्रमाणस्य फल भवति, इति पौराणिकानामाशय । किन्तु योगाचार्ये सम्भवप्रमाणस्यापि अनुमाने एवान्तर्भाव क्रियते । यतो यत्र खारीत्वमस्ति तत्र द्रोणादीना सत्त्व स्वाभाविकमेव । अनया रीत्या द्रोणादिव्याप्य खारीत्वं द्रोणादीना सत्तामनुमापयति । अतः सम्भवस्य पृथक् प्रमाणकल्पन व्यर्थमेव ।

अत पर तान्त्रिकै चेष्टाख्य पृथक् प्रमाण स्वीकृत तदपि न युक्तिसहम् । यतस्तस्यापि अनुमाने शब्दप्रमाणे वा अन्तर्भावो भवति ।

इत्य विभिन्नदार्शनिकै स्वीकृतानामुपमानादिषट्प्रमाणाना साख्ययोगाभिमतेषु त्रिषु प्रमाणेष्वेवान्तर्भाव सुस्थिरो भवति । अत योगाचार्याणा मते प्रत्यक्षानुमानागमानि त्रीण्येव प्रमाणानि सन्तीति सिद्धान्त इति शम् ।



# बौद्धदर्शने प्रमाणमीमांसा

श्री उदयचन्द्रो जैनः

भारतीयदर्शनशास्त्रस्येतिहासे बौद्धदर्शनस्य महत्त्वपूर्णं स्थानं वर्तते । नागार्जुन-आर्यदेव-मैत्रेय-असग-वसुबन्धु-दिङ्नाग धर्मकीर्ति-प्रज्ञाकरगुप्तप्रभृतिभिरनेकै दर्शन-शास्त्रनिष्णातैराचार्यै बौद्धदर्शनस्य न्यायस्य च विकासे महान् परिश्रम. कृतः । दिग्घनिकायस्य ब्रह्मजालसुत्ते, मज्झिमनिकायस्यानुमानसुत्ते, खुद्दक निकायस्य उदाने, विनयपिटकस्य पातिमोक्खे तथा अभिधम्मपिटकस्य कथावत्थु-प्रकरणे न्यायस्य कतिपयशब्दा तथा शास्त्रार्थे-निर्णयस्य कतिपयनियमा विद्यन्ते । कालान्तरे च दार्शनिकसम्प्रदायाना विकासेन सह न्यायशास्त्रस्यापि विकासोऽभूत् । दार्शनिका स्वसिद्धान्तमण्डनाय परपक्षखण्डनाय च न्यायशास्त्रस्योपयोगिता-मन्वभवन् ।

माध्यमिकसम्प्रदायस्य प्रवर्तक आचार्यनागार्जुन न्यायशास्त्रस्य प्रथमो विचारक आसीत् । अनेन माध्यमिककारिकाया प्राचीनन्यायस्य पुनरुक्त-सिद्ध-साधन-साध्यसमपरिहारादय शब्दा प्रयुक्ता वर्तन्ते । माध्यमिककारिकाया विग्रहव्यावर्तिन्या चाक्षपादसिद्धान्तस्य निराकरण युक्तिप्रदर्शनपूर्वक विहितम् । प्रमाणविध्वसन उपायकौशल्यहृदयशास्त्रं च नागार्जुनस्य नयशास्त्रे स्वतत्रग्रन्थौ स्त । आयदेव-मैत्रेय-असंग-वसुवन्धुनाम-धेयैराचार्यैरपि बौद्धन्यायोपरि स्वतत्रा ग्रन्था. प्रणीता. । इमे सर्वे आचार्या बौद्धन्यायस्य प्राथमिकावस्थायामभवन् । खिष्टाब्दस्य चतुर्थशताब्दीपर्यन्तं दार्शनिकग्रन्थेषु न्यायस्याप्याभासो यतस्ततो दृश्यते । किन्तु खिष्टाब्दस्य पञ्चमशताब्द्या न्यायशास्त्र दर्शनशास्त्रात् पृथक् जातम् । तत प्रभृति न्यायशास्त्रमवलम्ब्य अनेके स्वतत्रा. ग्रन्था निर्निर्मिताः ।

कालेऽस्मिन् दिङ्नागस्य नाम प्रथममायाति । दिङ्नागोबौद्धन्यायस्य प्रतिष्ठापकोऽथवा पिता इति कथन सर्वथोचितम् । दिङ्नागस्य प्रमाणसमुच्चय. बौद्धन्यायशास्त्रस्य प्रथमो ग्रन्थो यत्र प्रमाणस्य विधिवत् मीमासा विहिता । प्रमाणसमुच्चय. बौद्धन्यायस्य पथप्रदर्शक. । अस्मिन् ग्रन्थे षट् परिच्छेदा. सन्ति । १ प्रत्यक्षपरिच्छेदः २ स्वार्थानुमानपरिच्छेद ३ परार्थानुमानपरिच्छेद , ४ दृष्टान्त-

परिच्छेद ५ अपोहपरिच्छेद, ६ जातिपरिच्छेदश्च। दिङ्नागेन न केवल प्रमाणसमुच्चय एव विरचित किन्तु हेतुचक्रहमरुप्रमाणशास्त्र-न्यायप्रवेश-आलम्बन परीक्षा-त्रिकालपरीक्षादयोऽन्येपि ग्रन्था विनिर्मिताः। आचार्यधर्मकीर्तिना प्रमाणसमुच्चयोपरि प्रमाणवार्तिक विरचितम्। एवमेव न्यायविन्दु-हेतुविन्दु-वादन्यायसम्बन्ध-परीक्षा-प्रमाणविनिश्चयादयोऽन्येऽपि ग्रन्था रचिता। अतएव धर्मकीर्त्ति बौद्धन्यायस्योद्धारक विस्तारकश्च कथ्यते।

प्रमाणस्यावश्यकता

दर्शनशास्त्रे प्रतिपादितानां तत्त्वानां सिद्धयर्थं प्रमाणस्य महती आवश्यकता वर्तते। प्रमाणेन विना किमपि तत्त्व न सिद्धयति। अस्मादेव कारणात् प्रत्येकेन दर्शनेन प्रमाणस्य सत्ता स्वीकृता। यद्यपि प्रमाणस्य स्वरूपसख्यादिविषये अनेका विप्रतिपत्तयो विद्यन्ते तथापि प्रमाणसत्ताविषये न कोऽपि विवाद। प्रमाणविषयलक्षणसख्यागोचरफलविषया चतस्र विप्रतिपत्तय सन्ति।

प्रमाणस्वरूपमीमासा

'प्रमीयते येन तत्प्रमाणम्' इति प्रमाणशब्दस्य व्युत्पत्तिलभ्योऽर्थोऽस्ति। अथवा प्रमाया यत्साधकतम करण तत्प्रमाणम्। अस्मिन्नर्थे न कोऽपि विवाद। किन्तु प्रमाया साधकतम करण किमिति विषये विवादो दृश्यते। तत्र च बौद्धा ज्ञानमेव प्रमाया साधकतम करण स्वीकुर्वन्ति, नेन्द्रियार्थसन्निकर्षादीन्। हेयोपादेयवस्तुविषयाया प्रवृत्ते ज्ञानप्रधानत्वात् ज्ञानस्यैव प्रामाण्य भवितुमर्हति, नाज्ञानरूपस्येन्द्रियार्थसन्निकर्षादे। यद्यपि प्रमाणसमुच्चये प्रमाणसामान्यस्य लक्षण नोपलब्ध तथापि प्रमाणसमुच्चयटीकाया 'अज्ञातार्थज्ञापक प्रमाणम्' इतिप्रमाणलक्षण वर्तते। किन्तु धर्मकीर्ते प्रमाणवार्तिके प्रमाणस्य विशद लक्षण दृष्टिगोचर भवति। तथाहि—

प्रमाणमविसवादि ज्ञानमर्थ क्रियास्थिति।
अविसवादन शाब्देऽप्यभिप्रायनिवेदनात्॥

प्रमाणवा १।३

अज्ञातार्थ प्रकाशो वा।

प्रमाणवा १।७

ज्ञान प्रमाण नाज्ञानमिन्द्रियार्थसन्निकर्षादि। ज्ञान च न सर्वं किन्तु अविसवादि ज्ञान प्रमाणम्। विसवादन विसवादो वचन तद्योगाद्विसवादि। यस्मिन् ज्ञाने विसंवादो न विद्यते तदविसवादि। अविसंवादनं किमिति चेदुच्यते—'अर्थक्रियास्थितिरविसवादनम्'।

प्रत्येकस्यार्थस्य अर्थक्रिया वर्तते । यथा जलधारणाहरणादिघटस्यार्थक्रिया, । शीतातपनिवारणादि च पटस्यार्थक्रिया भवति । एवमेव सर्वेषामर्थानामर्थक्रिया विज्ञेया । प्रमाणेनोपदर्शितस्यार्थस्य क्रियाया स्थिति प्रमाणयोग्यता अविसवादनं कथ्यते । प्रमाणेनोपदर्शितोऽर्थो यदि स्वामर्थक्रिया कर्तुं समर्थस्तर्हि तज्ज्ञानमविसंवादि, अविसंवादित्वाच्च प्रमाणम् । अत प्रमाणेनार्थं परिच्छिद्यापि पुरुषोऽर्थे न प्रवर्तते, प्रवृत्तो वा कुतश्चित् प्रतिबन्धादे कारणात् अर्थक्रिया नाधिगच्छति तदपि प्रमाणमेव प्रमाणयोग्यतालक्षणस्याविसंवादस्य तत्र विद्यमानत्वात् । इत्येवप्रकारेणाविसंवादिज्ञान प्रमाण सिद्धयति । न केवलमविसवादि ज्ञान प्रमाण किन्तु तेन ज्ञानेनाज्ञातार्थप्रकाशकेन भवितव्यम् । अज्ञातस्यार्थस्य यज्ज्ञानं तत्प्रमाणम् । अर्थग्रहणेन द्विचन्द्रादिज्ञानस्य निरास । नहि द्विचन्द्रज्ञाने द्विचन्द्ररूपोऽर्थोऽस्ति । अज्ञातग्रहणेन सावृतस्यावयव्यादिविषयस्य निरासोविज्ञेय ।अविसवादकत्वमज्ञातार्थप्रकाशकत्व चोभयमपि परस्परापेक्षमेव लक्षण बोद्धव्यम् ।

यद्यपि धर्मकीर्तिना न्यायविन्दौ प्रमाणसामान्यस्य लक्षणमविधाय प्रमाणसख्याभेद प्रदर्शनपूर्वक विशेषलक्षणमेव विहित, तथापि धर्मोत्तरकृताया न्यायविन्दुटीकाया प्रमाणलक्षण दृष्टिपथमायाति । तथाहि —

"अविसवादकं ज्ञानं सम्यग्ज्ञाम् । लोके हि पूर्वमुपदर्शितमर्थं प्रापयन्सवादक उच्यते । तद्वज्ज्ञानमपि स्वय प्रदर्शितमर्थं प्रापयत् संवादकमुच्यते । प्रदर्शिते चार्थे प्रवर्तकत्वमेव प्रापकत्वम् । प्रवर्तकत्वमपि प्रवृत्तिविषयप्रदर्शकत्वमेव । नहि पुरुष हठात् प्रवर्तयितुं शक्नोति ज्ञानम् । अतएवचार्थाधिगतिरेव प्रमाणफलम् । अधिगते चार्थे प्रवर्तित पुरुष प्रापितश्चार्थ । तथा च सति अर्थाधिगमात् समाप्त. प्रमाणव्यापार । अतएवानधिगतविषय प्रमाणम् । येनैव हि ज्ञानेन प्रथममधिगतोऽर्थस्तेनैव प्रवर्तित पुरुष प्रापितश्चार्थ । तत्रैवार्थे किमन्येनज्ञानेनाधिक कार्यम् । ततोऽधिगतविषयमप्रमाणम् ।" न्यायविन्दुटीका पृ० ४

मोक्षाकरगुप्तकृताया तर्कभाषायामपि 'प्रमाण सम्यग्ज्ञानमपूर्वगोचरम्' इति प्रमाणलक्षण निर्दिष्टम् । अत्र सम्यग्ज्ञानपदेन मिथ्याज्ञानस्य संशयविपर्ययरूपस्य निरास । यत संशयविपर्ययज्ञानस्याविसंवादित्वं नास्ति । अपूर्वगोचरपदेन च गृहीतग्राहिज्ञानस्य निरासो बोद्धव्य ।

इत्येवप्रकारेण प्रमाणसामान्यस्य लक्षण विज्ञेयम् ।

## प्रमाणसख्या-मीमासा

प्रमाणसख्याविषये महती विप्रतिपत्ति विद्यते । प्रत्यक्षमेवैक प्रमाणमिति

चार्वाक । प्रत्यक्षमनुमान शाब्दं चेति साख्य । प्रत्यक्षमनुमानमुपमान शाब्द चेति नैयायिक । प्रत्यक्षमनुमानमुपमानं शाब्दमर्थापत्तिरिति प्राभाकर । प्रत्यक्षमनुमान-मुपमान शाब्दमर्थापत्तिरभावश्चेति भाट्ट बौद्धदर्शने तु प्रमाणं द्विविधम्। तदुक्तम्—

"द्विविध सम्यग्ज्ञानम् । प्रत्यक्षमनुमान च"

न्यायविन्दु पृ० ७

प्रमाणद्वित्वस्य कारण च विषयद्वैविध्यम्। विषयद्वैविध्य हि स्वलक्षणसामान्य-लक्षणरूपेण भवति । स्वलक्षण हि अर्थक्रियाया शक्त सामान्यलक्षण चाशक्तम् । स्वलक्षणमेव च परमार्थसत् कथ्यते, सामान्यलक्षण च सवृतिसत् । यदा हि विषय-द्वैविध्य तदा प्रमाणद्वैविध्यमपि सिद्धत्येव । बौद्धैर्हि प्रमाणसम्प्लवो न स्वीकृत । एकस्मिन् विषये एकस्यैव प्रमाणस्य प्रवृत्ति , न द्वयो नाप्यनेकेषा प्रमाणानाम् । अस्मात् कारणात् प्रमाणद्वित्वमनिवार्यमस्ति । तदुक्तम्—

मान द्विविध विषयद्वैविध्यात् शक्त्यशक्तित ।
अर्थक्रियाया केशादिनार्थोऽनर्थाधिमोक्षत ॥

प्रमाणवा० २।१

न प्रत्यक्षपरोक्षाभ्या मेयस्यान्यस्य सभव ।
तस्मात् प्रमेयद्वित्वेन प्रमाणद्वित्वमिष्यते ॥

प्रमाणवा० २।६३

### प्रत्यक्ष-स्वरूपम्

आचार्यदिङ्नागेन प्रमाण-समुच्चये प्रत्यक्षस्य लक्षणमित्थ कृतम्—"प्रत्यक्ष कल्पनापोढ नामजात्याद्यसयुतम् ।" कल्पनारहित ज्ञान प्रत्यक्ष भवति । प्रत्यक्षज्ञाने हि नाम जातिगुणक्रियाद्रव्यादिशब्दाना सयोगोन भवति। यदृच्छाशब्देषु नाम्नाविशिष्टोऽर्थ उच्यते डित्थ इति । जातिशब्देषु जात्या गौरियमिति । गुणशब्देषु गुणेन शुक्ल इति । क्रियाशब्देषु क्रियया पाचक इति । द्रव्यशब्देषु द्रव्येण दण्डी, विषाणीति । एतत्सर्व ज्ञान नामादिविशिष्ट कल्पनात्मक भवति । अतएव नामजात्यादियोजना कल्पनेति कथितम् ।

न्यायविन्दौ प्रत्यक्षलक्षणमित्थ वर्तते—

"तत्र कल्पनापोढमभ्रान्त प्रत्यक्षम् ।"

प्रत्यक्ष न केवल कल्पनापोढ किन्त्वभ्रान्तमपि भवति । अत्राभ्रान्तग्रहणं विप्रतिपत्तिनिराकरणार्थं नत्वनुमाननिवृत्त्यर्थम् । यत कल्पनापोढग्रहणेनैवानुमान

निवर्तितं भवति। असति अभ्रान्तग्रहणे गच्छद्वृक्षदर्शनादिकल्पनापोढत्वात् प्रत्यक्ष स्यात् तन्निवृत्त्यर्थमभ्रान्तग्रहणं विज्ञेयम्।

प्रमाणवार्तिके प्रत्यक्षलक्षणमिदं विद्यते—

प्रत्यक्ष कल्पनापोढ प्रत्यक्षेणैव सिद्धयति।
प्रत्यात्मवेद्य· सर्वेषा विकल्पो नाम सश्रय· ॥ १।१२३

कल्पनापोढप्रत्यक्षस्य साधक स्वसवेदनप्रत्यक्षमेव। न तु तत्साधनायान्यस्य प्रमाणस्य आवश्यकता वर्तते। यदि प्रत्यक्षे विकल्प स्यात्तर्हि स उपलभ्येत। न चोपलभ्यते। यत शब्दससर्गवान् विकल्प सर्वेषा प्राणिना प्रत्यात्मवेद्यो भवति। प्रत्यक्ष च विकल्परहितमनुभूयते।

का कल्पना यया रहितं प्रत्यक्षमिति चेदुच्यते—

"अभिलापससर्गयोग्यप्रतिभासप्रतीति· कल्पना।"

न्यायबिन्दु पृष्ठ १०

अभिलाप्यतेऽनेनेति अभिलापो वाचक शब्दः तत्र काचित् प्रतीतिरभिलापेन-ससृष्टाभासा भवति। यथा व्युत्पन्नसंकेतस्य घटार्थकल्पना घटशब्दसंसृष्टार्थविभाषा भवति। यथा बालकस्याव्युत्पन्नसकेतस्य कल्पना योग्यग्रहणेन सापि संगृहीता भवति। अतोऽभिलापससर्गयोग्यप्रतिभासप्रतीतिः कल्पना इति सिद्धं भवति।

स्वलक्षणे हि प्रथमं निर्विकल्पकंज्ञान जायते। तदनन्तरं सविकल्पकमपि तत्रोत्पद्यते। परमार्थत सविकल्पकज्ञानमविशदं भवति तत्र वैशद्यप्रतीतिस्तु निर्विकल्पकप्रत्यक्षस्य वैशद्यधर्मसमारोपाद्भवति। सविकल्पक ज्ञानं च न प्रमाणम्। कल्पनाजन्यत्वात्। प्रमाणत्वाभावे च प्रत्यक्षत्ववार्ता दूरोत्सारिता एव। अर्थग्राहक हि ज्ञानमर्थस्य कार्यम्। अर्थो हि ग्राह्यत्वात् ज्ञानस्य कारणम्। कल्पनाज्ञानं त्वर्थमन्तरेण वासनामात्रादेवोपजायमान कथमर्थकार्यं स्यात्। अर्थेन सहान्वय-व्यतिरेकाभावात्। यदि च कल्पनाज्ञानमर्थं साक्षात्कारि स्यात्तर्हि अन्धस्यापि रूपदर्शनप्रसंग· प्राप्नोति। अत· शाब्द्या बुद्धौ अर्थस्य प्रत्यक्ष इव प्रतिभासाभावा-न्नास्ति कल्पनाया अर्थसाक्षात्कारित्वम्।

प्रत्यक्षज्ञाने भ्रान्तेश्च कारण तिमिराशुभ्रमणनौयानसक्षोभादि भवति। तदुक्तम्—

तिमिराशुभ्रमणनौयानसक्षोभाद्यनाहितविभ्रम ज्ञानं प्रत्यक्षम्।

न्यायविन्दु पृष्ठ० १२

तिमिरं नेत्रयोर्विप्लव। इन्द्रियगतमिद विभ्रमकारणम्।

यथा शुक्ले शखे पीतज्ञानम् । आशुभ्रमण विषयगतविभ्रमकारणम् । अनेन हि अलातादौ चक्रभ्रान्तिरुत्पद्यते । नौयानादिबाह्याश्रयगतं विभ्रमकारणम् । गच्छत्या नावि स्थितस्य गच्छद्वृक्षादिभ्रान्तिरुत्पद्यते । सक्षोभ वातपित्तश्लेष्मणाम् । एतच्चाध्यात्मगत विभ्रमकारणम् वातादिषु हि क्षोभ गतेषु ज्वलत्स्तभादि-भ्रान्तिरुत्पद्यते ।

इत्येवप्रकारेण कल्पनारहित भ्रान्तिरहित च ज्ञान प्रत्यक्ष सिद्धयति ।

## प्रत्यक्षस्य भेदा

प्रत्यक्ष चतुर्विधम् । इन्द्रियप्रत्यक्ष, मानसप्रत्यक्ष , स्वसवेदनप्रत्यक्ष , योगि-प्रत्यक्ष चेति ।

## इन्द्रियप्रत्यक्षम्

तत्र चक्षुरादीन्द्रियपञ्चकाश्रयेणोत्पन्न बाह्यरूपादिपञ्चविषयालम्बन ज्ञानमि-न्द्रियप्रत्यक्षम् । तदुक्तम्—

सहृत्य सर्वतश्चिन्ता स्तिमितेनान्तरात्मना ।
स्थितोऽपि चक्षुषारूपमीक्षते साऽक्षजामति ॥

प्रमाणवा० २।१२४

## मानसप्रत्यक्षम्

"स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेनसमनन्तरप्रत्ययेन जनित तन्मनो-विज्ञानम् ।" न्यायवि० पृ० १३

मानसप्रत्यक्षोत्पत्तौ इन्द्रियज्ञान समनन्तरप्रत्यय ( उपादानकारण ) भवति । इन्द्रियज्ञानविषयस्यानन्तर विषयश्च सहकारिकारण भवति । एताभ्या द्वाभ्या कारणाभ्या मनोविज्ञान जन्यते । अन्धबधिरादीना मानसप्रत्यक्ष भवितु नार्हति । यतोहि इन्द्रियज्ञानजनित हि मानसम् । अन्धादीना रूपाद्यालम्बनमिन्द्रियज्ञानमेव नास्ति । अत कुतस्तज्जनित मानस भविष्यति । मनोविज्ञान हि इन्द्रियज्ञानगृही-तस्यार्थस्यानन्तरक्षण गृह्णाति । अतो न तत्र गृहीतग्राहित्वदोष. । तदुक्तम्—

तस्मादिन्द्रियविज्ञानानन्तरप्रत्ययोद्भव ।
मनोऽन्यमेव गृह्णाति विषय नान्धदृक् तत ॥ २।२४३

## स्वसवेदनप्रत्यक्षम्

"सर्वचित्तचैत्तानामात्मसवेदन प्रत्यक्षम् ।"

न्यायवि० पृ० १४

चित्त वस्तुमात्रग्राहि ज्ञनम् । चित्ते भवाश्चैत्ता ।

विशेषावस्थाग्राहिण सुखादय एतेषा सर्वेषा चित्तचैत्तरूपज्ञानानामात्मसवेदन भवति । न हि सा काचिच्चित्तावस्था यस्यामात्मसवेदन प्रत्यक्ष न स्यात् । यदि ज्ञान स्वसंवेद्यं न स्यात् तर्हि ज्ञातोऽर्थ इति व्यपदेशोऽपि दुर्घटः स्यात् । नागृहीत विशेषणा विशेष्ये बुद्धिरिति न्यायात् । तदुक्तं प्रमाणवार्तिकालङ्कारे—

परोक्ष' यदि तज्ज्ञान ज्ञानमित्येव तत्कुत' ।
परोक्षस्य स्वरूप कस्तस्य लक्षयितु क्षम ॥
विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते ।
इयमेवात्मसंवित्तिरस्य या जडरूपता ॥

## योगिप्रत्यक्षम्

"भूतार्थभावनाप्रकर्षपर्यन्तज योगिज्ञानं चेति ।"

न्यायवि० पृ० १४

योग समाधि चित्तैकाग्रतालक्षण. । स यस्यास्तीति स योगी । तस्य ज्ञान प्रत्यक्ष भवति । भूतार्थ प्रमाणेन दृष्टार्थ. । यथा चत्त्वार्यसत्यानि । भावना पुन पुनश्चेतसि समारोप । भूतार्थभावनाप्रकर्षपर्यन्ताज्जात योगिन. ज्ञान कामशोकाद्युपप्लुतपुरुषज्ञानवत् विशद भवति । तदुक्तम्—

कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुता ।
अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव ॥

प्रमाणवा० २।२८२

## अनुमानस्य लक्षणम्

अन्वयव्यतिरेकवतो लिङ्गात् पर्वतादिधर्मिणि या वह्न्यादिपरोक्षार्थप्रतीति र्भवति सा प्रतीतिरनुमान कथ्यते । तदनुमान च परोक्षार्थानामेकान्तेन साधन भवति । प्रत्यक्षस्य तत्राप्रवृत्ते । तदुक्तम्—

या च सम्बन्धिनो धर्माद् भूतिर्धर्मिणि जायते ।
सानुमान परोक्षाणामेकान्तेनैव साधनम् ॥

प्रमाणवा० २।६२

अनुमान हि द्विविधम् ।
स्वार्थानुमान परार्थानुमान चेति ॥

## स्वार्थानुमानम्

"तत्र स्वार्थं त्रिरूपाल्लिङ्गाद् यदनुमेये ज्ञान तदनुमानम् ।"

न्यायवि० पृ० २१

वह्न्यादिना सह तदुत्पत्ति विद्यते। अनुपलब्धेश्च प्रतिषेध्येन सह तादात्म्यं तदुत्पत्तिर्वोभयमपि अस्ति। घटविविक्त प्रदेश प्रदेशज्ञान वा अनुपलब्धि। तत्रानुपलब्धे कर्मधर्मपक्षे साध्येन सह तादात्म्यलक्षण एव सम्बन्धः। कर्तृधर्मपक्षे तु तदुत्पत्ति। एषु त्रिपु हेतुषु मध्ये कार्यस्वभावहेतू विधिसाधकौ, अनुपलब्धिहेतुश्च प्रतिषेधसाधक.।

## परार्थानुमानम्

"त्रिरूपलिङ्गाख्यान परार्थानुमानम्। करणे कार्योपचारात्।"

न्यायविन्दु पृ० ४६

परस्मादिद परार्थम्। अत्र परार्थानुमानं त्रिरूपलिङ्गवचनात्मक कथितम्। यद्यप्यनुमानं सम्यग्ज्ञानात्मक प्रमाणत्वात्, तथापि कारणे वचने कार्यस्यानुमानस्योपचार कृत्वा वचनात्मकमनुमानमुक्तम्। परार्थानुमान च प्रयोगभेदात् द्विविधम्—साधर्म्यवत् वैधर्म्यवच्चेति। यत्र हेतोरन्वय प्रदर्श्यते तत् साधर्म्यवत्। यत्र च व्यतिरेक प्रदर्श्यते तत् वैधर्म्यवत्। परार्थानुमानप्रयोगे चैकमेवान्वयवाक्य व्यतिरेकवाक्य वा प्रयोक्तव्यम्। द्वयो प्रयोगस्यावश्यकता नास्ति। यत साधर्म्येनापि प्रयोगेऽर्थाद्वैधर्म्यगतिर्भवति। असति व्यतिरेके साध्येन सह हेतोरन्वयाभावात्। तथा वैधर्म्येणाप्यन्वयगतिर्भवति। अन्वयेऽसति साध्याभावे हेत्वभावस्यासिद्धेः।

## अनुमानस्य प्रामाण्यम्

अनुमानस्य विषय सामान्यलक्षणम्। सामान्य च विजातीयव्यावृत्युपकल्पितं न परमार्थसत्, किन्तु सवृतिसत्। अत सामान्यग्राहकमनुमान भ्रान्त भ्रान्तत्वाच्च अप्रमाणम्। अनुमानानुमानाभासयोश्च न कश्चिद्विशेष इति स्यादाशका। अतोऽत्रेद विचार्यते यदनुमानस्य प्रामाण्य कथ सिद्धयति। यद्यपि अनुमानं सामान्यग्राहक तथापि सामान्यग्रहणानन्तर स्वलक्षणप्राप्तिर्भवति। अतोऽनुमान परम्परया स्वलक्षणप्राप्तौ निमित्तत्वात् प्रमाणमनुमानाभासं चाप्रमाणम्। धर्मकीर्तिना एतद्विषय दृष्टान्तद्वारा सम्यग्निरूपित तथाहि—

मणिप्रदीपप्रभयो मणिबुद्ध्याभिधावतो।<br>
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियाप्रति॥<br>
यथा तथाऽयथार्थत्वेऽप्यनुमानतदाभयो।<br>
अर्थक्रियानुरोधेन प्रमाणत्व व्यवस्थितम्॥

प्रमाणवा० २।५७५८

एक' पुरुष मणिप्रभाया मणिवुद्धि करोति । अन्यश्च प्रदीपप्रभाया मणिवुद्धि करोति । अत्रोभयस्यापि ज्ञान मिथ्याज्ञानम् । किन्तु मणिप्रभाया मण्यध्यवसायी पुरुष मणिसाध्यामर्थक्रिया प्राप्नोति । प्रदीपप्रभाया तु मणिव्यवसायी प्राप्नोति । एवमेवानुमानेनार्थक्रियासमर्थस्वलक्षणप्राप्ति परम्परया भवति, नानुमानाभासेन । अस्मादेव कारणात् भ्रान्तमप्यनुमान प्रमाण भवति ।

### परार्थानुमानस्याङ्गानि

यद्यपि न्यायप्रवेशे पक्षहेतुदृष्टांतभेदेन त्रीणिअङ्गानि कथितानि तथापि धर्मकीर्तिना हेतुदृष्टान्तौ द्वाववयवौ अथवा हेतुरेव केवलोऽवयव प्रतिपादित । तथाहि—

तद्भावहेतुभावौहि दृष्टान्ते तदवेदिन ।
ख्याप्येते विदुषा वाच्योहेतुरेव हि केवल ॥

प्रमाणवा. ३।२६

ये तादात्म्यतदुत्पत्तिप्रतिवन्ध न जानन्ति तान् प्रति दृष्टान्ते तादात्म्यतदुत्पत्ती कथ्येते । ये तु प्रतिवन्ध विदन्ति तेषा विदुषा हेतुरेव केवलो वाच्य , न दृष्टान्त । तत्र दर्शनीयस्य प्रतिवन्धस्य सिद्धत्वात् ।

### शब्दज्ञानस्याप्रामाण्यम्

शब्द च ज्ञान वाह्यार्थाविसवादेन प्रमाण स्यात् । न च शब्दाना वाह्यार्थेन कश्चित् सम्वन्ध । नहि शब्दार्थयो तादात्म्य तदुत्पत्तिर्वा विद्यते । अत शब्दानामर्थं सहाविनाभावस्याभावात् शब्देभ्योनार्थस्य निश्चय । ते शब्दा किं कुर्वन्ति इति चेदुच्यते ते हि शब्दा वक्तुरभिप्रायस्य ( विवक्षाया ) सूचका , तदन्वयव्यतिरेकानुविधानात् । विवक्षा यथार्थं न भवति, विसवादनाभिप्रायादज्ञानाद्वा अन्यथापि विवक्षासभवात् ।

तथाचोक्तम्—

नान्तरीयकताऽभावाच्छब्दाना वस्तुभि सह ।
नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचका ॥

प्रमाणवा ३।२१२

वक्तुर्विवक्षाविषयो विकल्पोभवति । शाब्द्या वुद्धौ विकल्प एव प्रतिभासते । तत्रैव शब्दस्य प्रमाण्य नार्थे । उच्चारितात् शब्दात् विवक्षितार्थप्रतिभासी विकल्पो ऽनुमीयते, तत्कायत्वात् शब्दस्य । अतो विवक्षितार्थप्रतिभासिविकल्प एव शब्दस्य प्रामाण्य, तत्प्रतिवन्धाभावात् । तदुक्तम्—

वक्तृव्यापारविषयो योऽर्थोबुद्धौ प्रकाशते ।
प्रामाण्य तत्र शब्दस्य नार्थतत्वनिबन्धनम् ॥

प्रमाणवा. १।४

शब्दस्य वाच्यो नार्थ॰ किन्त्वन्यापोह॰ । अन्यस्यापोह व्यावृत्तिरित्यन्यापोह । गोशब्देन नहि पुर स्थिता गौ प्रतिपाद्यते किन्त्वगोव्यावृत्ति प्रतिपाद्यते । या नागौ सा गौरित्यगोव्यावृत्तिमुखेन गोप्रतिपति भवति । अतएव शब्दोऽन्यापोह-वाचकोऽस्ति । तदुक्तम्—

विकल्पप्रतिविम्बेषु तन्निष्ठेषु निबध्यते ।
ततोऽन्यापोहनिष्ठत्वादन्यापोहकृच्छ्रुति ॥

प्रमाणवा २।१६४

किञ्च स्वलक्षणे सकेतोऽपि न शक्यक्रियः । उत्तरकाले शब्दादर्थप्रतिपत्त्यर्थं हि संकेतक्रिया भवति । न च विशेषा कालान्तरमनुवर्तन्ते, क्षणिकत्वात् तेषाम् । अतो य एव शब्दाना विषयोऽव्यवच्छेद स एव तै सयोज्येत, न स्वलक्षणम् । तदुक्तम् —

अनन्वयात् विशेषाणा सकेतस्याप्रवृत्तित ।
विषयो यश्च शब्दाना सयोज्येत स एव तै ॥

प्रमाणवा १।१२८

प्रमाणविषय-मीमासा .

प्रत्यक्षस्य विषय स्वलक्षणम् । स्वमसाधारणलक्षण तत्त्वं स्वलक्षणम् । वस्तूनो ह्यसाधारण च तत्त्वमस्ति सामान्यं च । तत्र यदसाधारणं तत्प्रत्यक्षग्राह्य भवति । स्वलक्षणस्य लक्षण चेत्थं विज्ञेयम्—यस्यार्थस्य सन्निधानासन्निधानाभ्या ज्ञानप्रतिभासभेदस्तत्स्वलक्षणम् ।" न्याय बि० पृ० १६

योहि ज्ञानस्य विषयः सन्निहित सन् स्फुटमाभास ज्ञानस्य करोति, असन्निहि-तम्तु योग्यदेशावस्थित एवास्फुटमाभासं ज्ञानस्य करोति, तत्स्वलक्षणम् । सर्वाण्येव वस्तूनि दूरादस्फुटानि दृश्यन्ते समीपे च स्फुटानि, तान्येव स्वलक्षणानि । धटस्व-लक्षणं गोस्वलक्षणमित्यादिरूपेण सर्वे विशेषपदार्था स्वलक्षणानि विज्ञेयानि । स्वलक्षणमेव च परमार्थसत् कथ्यते । स्वलक्षणमेव वस्तु । यच्चार्थक्रियासमर्थं भवति तदेव वस्तु। यच्चार्थक्रियासमर्थं तदेव परमार्थसत् । वाहदोहाद्यर्थक्रियासमर्थं गोस्वलक्षणमेव भवति, न सामान्यलक्षण गोत्वम् । तदुक्तम्—

अर्थक्रियासमर्थं यत् तदत्र परमार्थसत् ।
अन्यत् सवृतिसत् प्रोक्त ते स्वसामान्यलक्षणे ॥

प्रमाणवा २।३

"अन्यत् सामान्यलक्षणम्" न्यायबि० पृ० १७

उक्तलक्षणात् स्वलक्षणात् यदन्यत् तत् सामान्यलक्षणम् । यन्न स्वलक्षण तत् सामान्यलक्षणम् । गोत्वघटत्वादिसामान्य हि सकलव्यक्तिसाधारण भवति । अर्थक्रियायामसमर्थत्वात् तदेव सवृतिसत् कथ्यते । एतत् साामन्यलक्षणमनुमानस्य विषयो भवति ।

प्रमाणफलमीमासा

बौद्धदर्शने हि प्रमाणफलयोर्नास्ति कश्चिद्भेद । तदेव ज्ञान प्रमाण तदेव च फलम् । एकस्मिन्नेव ज्ञाने प्रमाणफलव्यवस्था चेत्थ भवति । इह नीलादेरर्थात् ज्ञान द्विरूपमुत्पद्यते—नीलाकार नीलबोधस्वरूप च । तत्रानीलाकारव्यावृत्या नीलाकार ज्ञान प्रमाणम् । अनीलबोधव्यावृत्या नीलबोधस्वरूप च फलम् । तदुक्तम्—

तदेव च प्रत्यक्ष ज्ञान प्रमाणफलमर्थ-प्रतीतिरूपत्वात् । अर्थसारूप्यमस्य प्रमाणम् । तद्वशादर्थप्रतीतिसिद्धे । न्याय० वि० पृ० १८, १९

अर्थाज्जायमान ज्ञानमर्थाकार भवति । अर्थाकारतयैव नीलस्येयमधिगतिरित्यादिविषयव्यवस्था भवति । नहि अन्य कश्चिदिन्द्रियादिः स्वभेदात् ज्ञानस्य भेदकोऽपि सन् अर्थसरूपता मुक्त्वा नीलस्येयमधिगत्ति, पीतस्य चेयमित्यादिरूपेण एनामधिगतिं ज्ञेयेनार्थेन घटयति । तस्मादर्थाकारता प्रमेयाधिगते साधन भवति । सारूप्यादन्यत्र साधने नीलस्येयमधिगति पीतस्य चेयमित्यादिरूपेणाधिगतिक्रियाया कर्मसम्बन्धो न सिद्ध्यति । सा चाधिगति ज्ञानस्यात्मभूतैव । तस्मात् कारणात् प्रमाणात् नार्थान्तर फलम् । प्रमाणमेव फलमित्यर्थ । तदुक्तम्—

अर्थेन घटयत्येना न हि मुक्त्वार्थरूपताम् ।
अन्य स्वभेदाज्ज्ञानस्य भेदकोऽपि कथञ्चन ॥
तस्मात् प्रमेयाधिगते साधन मेयरूपता ।
साधनेऽन्यत्र तत्कर्मसम्बन्धो न प्रसिद्ध्यति ॥
सा च तस्यात्मभूतैव तेन नार्थान्तर फलम् ।

प्रमाण वा० २।३०५, ३०६, ३०७

सव्यापारप्रतीतत्वात् प्रमाण फलमेव सत् ।
प्रमाणत्वोपचारस्तु निर्व्यापारे न विद्यते ॥

स्वसवित्ति. फलं वात्र तद्रूपादर्थनिश्चयः ।
विषयाकार एवास्य प्रमाण तेन मीयते ॥

प्रमाण समु० ९, १०

विषयाधिगतिश्चात्र प्रमाण फलमिष्यते ।
स्ववृतिर्वा प्रमाण तु सारूप्यं योग्यताऽपि वा ॥

तत्त्व-सग्रह का० १३४४

बाह्यार्थवादे सारूप्यं प्रमाणमधिगतिश्च फलम् ।
विज्ञानवादे च ज्ञानगतयोग्यता प्रमाण स्वसवेदन च फलमिति विशेष

विषयेन्द्रियालोकादिभ्यः समुत्पन्न ज्ञान विषयाकारमेव कथ धत्ते नेन्द्रियाद्याकारमिति चेदुच्यते—विषयेन्द्रियादिकारणेभ्य समुत्पन्न ज्ञानं स्वकारणायातविषयगतशक्तिभेदात् विषयाकारमेव भवति, नेन्द्रियाद्याकारम् । यथा सन्तानोत्पत्तौ मातापित्रोराहारकालादेश्च हेतुत्वेऽपि अपत्यमेकस्यैव पितुर्मातुर्वा आकार धत्ते, अन्यस्याहारादे कस्यचिदाकार न धत्ते । तद्वदेव ज्ञानेऽपि योज्यम् । तदुक्तम्—

सर्वमेव हि विज्ञान विषयेभ्य' समुद्भवद् ।
तदन्यस्यापि हेतुत्वे कथञ्चिद् विषयोक्रति ॥
यथैवाहारकालादेर्हेतुत्वेऽपत्यजन्मनि ।
पित्रोस्तदेकस्याकार धत्ते नान्यस्य कस्यचित् ॥

प्रमाण वा० २ । ३६८, ३६९

क्षणिकोऽर्थ ज्ञानोत्पादनानन्तरं विनष्टत्वात् ज्ञानस्य विषय कथ भवति, ज्ञानकालेऽर्थस्य सत्ताया अभावादिति चेदुच्यतेपदार्थे विनष्टेऽपि विनाशकाले सोऽर्थ' स्वाकार ज्ञाने समर्पयति । अत तस्मादर्थादुत्पन्न ज्ञानं तस्याकार जानाति । एतद्रीत्या च सोऽर्थ ज्ञानस्य विषयो भवति । तदुक्तम्—

भिन्नकाल कथं ग्राह्यमिति चेद् ग्राह्यता विदु ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥

प्रमाण वा० २ | २४७

तदुत्पत्ति ताद्रूप्य तदध्यवसायश्च

अर्थेन्द्रियादिसमुत्पन्न ज्ञानमर्थमेव कथ जानाति नेन्द्रियादिकमिति चेदुच्यते—अर्थाकारं ज्ञानमर्थमेव जानाति, नेन्द्रियादिकम् । अत्र ताद्रूप्येण व्यवस्था कृता । प्रथमज्ञानानन्तर समुत्पन्ने द्वितीयज्ञाने तदुत्पत्तिताद्रूप्यसद्भावेऽपि द्वितीयज्ञानं

प्रथमज्ञान कथ न जानाति ? अस्य कारणमिद वर्तते यद् द्वितीयज्ञान तदध्यवसाय ( अनुकूलविकल्प ) नोत्पादयति । नीलज्ञान नीलमिदमिति विकल्पमुत्पादयति पूर्वज्ञानमिदमिति विकल्प च नोत्पादयति । अत द्वितीयज्ञान नीलमेव जानाति, न तु पूर्वज्ञानम् । अत्र तदध्यवसायेन व्यवस्था कृता ।

## प्रमाणस्य प्रामाण्यम्

किन्नाम प्रमाणस्य प्रामाण्यम् ? प्रतिभासविषयाव्यभिचारित्व प्रामाण्यम् । प्रमाणेन योऽर्थ येन रूपेण ज्ञात स तेनैव रूपेण प्राप्तव्य । यदि जलज्ञानानन्तर जलस्य प्राप्तिर्न भवति तर्हि तत्र जलज्ञानस्य प्रामाण्य न सिद्ध्यति । प्रमाणस्योत्पत्यनन्तर तस्य प्रामाण्य स्वत ज्ञायते परतो वा ? अस्मिन् विषये बौद्धाना नैकान्तपक्ष किन्तु उभयपक्ष समाश्रित । अभ्यस्तदशाया असकृद्व्यवहाराभ्यासादर्थ दर्शनमात्रेण प्रमाण भ्रमविविक्तस्वरूप निश्चीयते । अर्थक्रियानिर्भास तु प्रत्यक्ष स्वत एथार्थानुभवात्मक, न तत्र पराऽर्थक्रिया अपेक्ष्यते, इति तदपि स्वतोनिश्चित प्रामाण्यम् । यत्त्वनभ्यस्तदशाया सदिग्धप्रामाण्य तस्यार्थक्रियाज्ञानादनुमानाद्वा प्रामाण्य निश्चीयते ।

आचार्यशान्तरक्षितेन अस्मिन् विषये बौद्धाना पक्ष अनियमवादरूपेणोपस्थापित । प्रामाण्यमप्रामाण्य चोभय स्वत , उभय परत , प्रामाण्य स्वत अप्रामाण्य तु परत , अप्रामाण्य स्वत प्रामाण्य च परत , इति चतुर्भ्य पक्षेभ्य अतिरिक्त अनियमपक्षोऽपि अस्ति य प्रामाण्यमप्रामाण्य चोभयमवस्थाविशेषे स्वत अवस्थाविशेषे च परत स्वीकरोति । तदुक्तम्—

"नहि बौद्धैरेषा चतुर्णामेकतमोऽपि पक्षोऽभीष्ट अनियमपक्षस्येष्टत्वात् । तथाहि—उभयमप्येतत् किंचित् स्वत किंचित् परत । अतएव पक्षचतुष्टयस्य उपन्यासोऽप्युक्त पञ्चमस्यानियमपक्षस्य सभवात् ।" तत्त्वसग्रह प० का० ३१२३ ।

इत्येव प्रकारेण 'बौद्धदर्शने प्रमाणमीमासा' विषयमवलम्ब्यात्र सक्षेपेण किंचिद्विवेचितम् । विस्तरेण तत्तद्ग्रन्थेषु द्रष्टव्यमित्यलमतिप्रसगेन ।

•

# शब्दप्रामाण्यम्

आचार्य श्री कमलाकान्त उपाध्याय.

व्याकरण-साहित्य-वेदान्ताचार्य , न्यायशास्त्री, काव्यतीर्थश्च

भारतीयविदुषा स्फीतगुणाना नाज्ञातपूर्वमेतदावेदनीय यत् सर्वेषु दर्शनग्रन्थेषु प्रत्यक्षादिविविधप्रमाणानि स्वीकृत्यैव तत्तत्प्रमाणैस्तर्कयित्वा स्वीय मतं सम्यक् प्रतिपादयन्ति दर्शनशास्त्रप्रणेतार॰ पूर्वाचार्या । आस्तिकनास्तिकेतिभेदद्वयेनैव भारतीयदर्शनशास्त्राणा द्विधाभेद कुर्वन्ति व्याख्यातार॰ । साख्य-योग-न्याय-वैशेषिकेतिचत्वारि, पूर्वोत्तरमीमासेतिद्वे च .मिलित्वा षडास्तिकदर्शनानि प्राय. परिगण्यन्ते । अथ च भौतिकवादिचार्वाक-बौद्ध-जैनेतित्रीणि नास्तिकदर्शनानि मुख्यतया दरीदृश्यन्ते । अथवा चार्वाक विहाय सौत्रान्तिक-माध्यमिक-वैभाषिक-योगाचारेतिचत्वारि बौद्धदर्शनानि सन्तीति । ईश्वरसत्तास्वीकारेणैवास्तिकता तदस्वीकारे च नास्तिकतेति ग्राम्यविचारसरणि । यतो हि साख्यसिद्धान्तस्वीकर्तृभि. यज्ञादिकर्मकर्तृकफलावाप्तिमतविशारदै मीमासकैश्चापि नैवेश्वरसत्ता स्वीक्रियते । अतश्च 'नास्तिको वेदनिन्दक'' इत्येवपरम्परागतविचारसार यत्रकुत्रापि स्मृत्यादिग्रन्थेषु भूयो भूय. श्रूयते । चार्वाकबौद्धजैनाचार्या नैव वेदेष्वास्था कुर्वन्तीत्येतदस्मान्नास्तिका कथ्यन्ते । अत्र न काचिदनादृति. ।

आस्तिकदर्शनेषु पूर्वमीमासा तु वैदिककर्मकाण्डमीमासाकरणप्रयोजनीभूतमेव। उत्तरमीमासापरपर्याय, ज्ञानकाण्डविषयकश्रुत्यनुरोधेनैव वेदान्तदर्शन प्रकटीभूतम् । अर्थात् मन्त्रब्राह्मणोभयसमर्थकयुक्ति-तर्कपुर सरा पूर्वकरणीया कर्ममीमासा एव पूर्वमीमासा कथ्यते । पश्चाच्च आरण्यकोपनिषदाद्यनुरोधेन ज्ञानकाण्डस्य विवेचनात् समादरणीया ज्ञानमीमासा वेदान्तपदेन व्यवह्रियते । यजुर्वेदस्यान्ते चत्वारिंशत्तमाध्याये वर्तमानाच्च वा वेदान्त इति कथ्यते । वेदापरपर्यायश्रुतिपदेन मन्त्रब्राह्मणोपनिषत्त्रयाणा ग्रहण भवतीति ज्ञातव्यम् । अतएवोभयो वेदप्रामाण्य यत्रतत्र चरितार्थम् सजायते । यद्यपि साख्य-योग-न्याय-वैशेषिकेतिचतुर्णामास्तिकदर्शनाना स्वातन्त्र्येणाविर्भाव संजात , तथापि वेदाविरुद्धत्वादुक्तचत्वारि दर्शनान्यपि

वाक्यात् पदानामत्यन्तप्रविवेको न कश्चन ।" स एव स्फोटस्वरूप नानावर्णपद-वाक्यादिभिर्व्यक्तित. नित्य. शब्द द्विधा भवति । पौरुषेयोऽपौरुषेयश्चेति । आप्ताना शब्द पौरुषेय, अपौरुषेयश्च वेद इति अग्रे विवेक्तव्यम् ।

मीमासकास्तु स्फोटमस्वीकृत्यैवापराभिर्विधाभि. शब्दस्य नित्यत्वं साधयन्ति । पद-पदार्थयोर्नित्य सम्बन्ध । सहैवोभयो सृष्टि । वर्णसमूह शब्द' । प्रत्येकं वर्णो व्यापक निरवयवश्च, अतएव नित्यश्च । नित्यत्वादेव सत्युच्चरिते अमुकवर्णइति परिचीयते । अथचैकएव वर्ण बहुभिर्मुखै. मुहुर्मुहुरुच्चार्यते । अत नित्य एव । नैव ध्वनिपर्याय शब्द । ध्वनिस्तु वर्णोच्चारणे साधनमात्रम् । ह्रस्वदीर्घादिभेदा', उदात्तादिव्यवहाराश्च ध्वनेरेव, न तु वर्णानाम् । ध्वनेर्भेदेन नैववर्णभेद. एतादृश-नित्याना वर्णाना समुदाय एव शब्द । स च नैवावयवीति विभाव्यताम् । अथ च शब्दाना नित्यत्वाभावे 'गौर्गच्छतीति' वाक्योच्चारणे क्रमश गकारादिविनाशे जातेऽर्थावगमो न भवेत्, पूर्वोच्चारितनष्टवर्णाना शब्दनिर्माणाक्षमत्वेन नष्टाना शब्दा-ना च वाक्यनिर्माणासामर्थ्यात्, नष्टा शब्दा अर्थं न ज्ञापयेयु । ज्ञाप्यज्ञापकयोरेक-कालावच्छेदेनावस्थितिरावश्यिकेति विवेकात् । स्मृतिज्ञानस्य परापेक्षकत्वात् पुरुषस्य बुद्धिदोषेण भ्रामकत्वाच्च नैव स्मृतिबलेन पूर्वपूर्वोच्चरितविनष्टवर्णादिभिर्वाक्या-र्थावगमो भवेदिति, अतएवाह प्रकरणपञ्चिकायाम्–"प्रमाणमनुभूति सा स्मृतेरन्या न सा स्मृति' न प्रमाण स्मृति. पूर्वप्रेतिपत्तिव्यपेक्षणात्" एतेन स्मृते प्रामाण्यमित्य-पि परास्तम् ।

प्रभाकर-कुमारिलयोरुभयोरपि मते अर्थास्तु वर्णाना धर्म एव, न तु वर्णात्, स्फुटन्ति । अत एव नास्ति स्फोटवादस्य सार्थक्यम् । इति कृत्वैव शाब्दिकान् दूषयन्ति मीमासकाः ।

इत्थं च नित्या एव वर्णा. सर्वत्रैव सर्वदा विद्यन्ते । उच्चारणेन तु तेषामभि-व्यक्तिमात्रं जायते । नैवोत्पद्यन्ते नापि च विनश्यन्ति वर्णा शब्दा वा । यथा चैकस्य 'राम'-शब्दस्य बहवोजना एककालावच्छेदेन बहुत्रोच्चारणं कुर्वन्ति । । सर्वत्र च 'राम शब्द समानमर्थं प्रत्याययति । अतएव 'राम' शब्दो नित्य इति सरल-निष्कर्ष । यदि च पौरुषेयाणा शब्दानामेतादृशं माहात्म्य तर्हि का कथाऽपौरुषे-याणा वेदवाक्यानामिति तद्विषयेऽग्रे विचारयाम ।

अत्र च पौरुषेयवाक्याना प्रामाण्यविषये चेत्थविचारयन्ति शास्त्रविद —आप्त-वाक्यमेव प्रमाण भवेत् । आप्तस्तुयथार्थवक्ता इतिन्यायविद । आकाक्षा-योग्यता-

इत्थंच वेदस्य ज्ञानस्वरूपत्वात् ज्ञानस्य च प्रत्यक्षानुमानोपमानादिभिरसिद्धत्वात् स्वत प्रामाण्यम्। यथाचाह-अर्थविपया हि प्रत्यक्षवुद्धि , न वुद्धिविषया।" प्रकरणपञ्चिकायाम्। अग्रेऽप्याह तत्रैव-"सवित्त्रयैव सवित् सवेद्या, न तु सवेद्यतया अर्थात् ज्ञानस्योपस्थिति अपरान् विषयान् प्रकाशयति, न तु स्वम्। इत्यभिप्राय॰। किं वहुना, वेदस्य नित्यज्ञानत्वात् स्वयं प्रकाशरूपत्वाच्च सर्वाणि प्रमाणान्यतिशेते वेदप्रमाणम्। इति संक्षेप.।



# सांख्यप्रमाणमीमांसा

श्रीशिवचन्द्र भट्टाचार्यः

"दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्। त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि"। इतीश्वरकृष्णकारिकया सांख्यानां प्रमाणत्रैविध्य-वादित्वं तावत् स्पष्टमस्ति। अग्रे च ईश्वरकृष्णेन "सामान्यतस्तु दृष्टादतीन्द्रि-याणां प्रतीतिरनुमानात्। तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धं" मिति वदता त्रिविधप्रमाणस्वीकारकारणं प्रमाणानां विषयविभागश्च प्रदर्शितः। तद्यथा केचन रूपादयो विषयाः सन्ति, ये प्रत्यक्षापरपर्यायेण दृष्टप्रमाणेनो पलभ्यन्ते, तादृशोपलब्ध्यनुरोधेन दृष्टप्रमाणस्वीकारः स्वीकृतेनापि दृष्ट प्रमाणेन न सर्वसमीहितसिद्धिः। सन्त्यपरेऽपि विषया अतीन्द्रियाः, यत्र दृष्ट प्रमाणं न प्रवर्त्तते। तेषाञ्चोपलब्ध्यनुरोधेनानुमानप्रमाणस्वीकारः। स्वीकृतेऽपि अनुमानप्रमाणे न तेन सर्वसमीहितसिद्धिः शिष्यन्ते खलु स्वर्गनरकादयो विषयाः, ये खलु नानुमानेन न वा दृष्टप्रमाणेनोपलभ्यन्ते। तेषामुपलब्ध्यनुरोधेन आप्तवचन रूपशब्दप्रमाणस्वीकारः। इत्येवमुक्तकारिकार्थपर्यालोचनया प्रतिभाति यत् सांख्यैः पूर्वं-पूर्वप्रमाणानामसामर्थ्ये सति प्रयोजनानुरोधेनोत्तरोत्तरमेकैकं प्रमाणं स्वीकृतमिति। प्रयोजनानुसारिणी सांख्यानां प्रमाणकल्पनेति। केचनाधुनिका मन्यन्ते सांख्यमते एकैकप्रमाणस्य नियतमेकैकं प्रमेयमस्ति। तत्तद्विलक्षण प्रमेयोपलब्ध्यनुरोधेन विभिन्नप्रमाणकल्पना सांख्यमते, प्रमाणत्रैविध्ये च प्रमेयानां त्रैविध्यं प्रयोजकम्। तथाहि सन्ति रूपादय एकविधा ऐन्द्रियका प्रत्यक्षनियतप्रमेयाः। येषामुपलम्भार्थं प्रत्यक्षप्रमाणकल्पना। अतीन्द्रियाश्च के चनानुमानस्य नियतं प्रमेयाः सन्ति, येषामुपलम्भार्थं सांख्यानाम् अनुमान-प्रमाण कल्पना। अपरेऽपि एकविधाः स्वर्गनरकादय आप्तवचननियतप्रमेयाः सन्ति। येषामुपलम्भार्थं शब्दप्रमाणकल्पना। एवं त्रिविधप्रमेयानुसारेण सांख्यैः त्रिविधं प्रमाणं स्वीकृतम्। इति। एषएवार्थः पूर्वोक्तकारिकाया अभिप्रेत इति। एतन्मतमिदानीं पर्यालोच्यते। यद्यपि प्रमेयविशेषानुसारेण प्रमाणविशेषस्वीकारः सांख्यानामिति कथनं नासंगतम् मन्ये समीचीनमेवैतत्। तथापि सांख्यमते

एकैकप्रमाणस्य नियतमेकैकप्रमेयमस्तीति कथनं सगतं न मन्ये। तथाहि दृष्ट प्रमाणस्य विपयास्तावद् रूपादय· सन्ति। ते च दृष्टप्रमाणस्य न नियत प्रमेयाः। यतो हि ते कदाचिद् दृष्टेन प्रमाणेन प्रमीयन्ते क्वचिदनुमानेन क्वचिच्छब्देनापि प्रमीयन्त इत्येकमात्रदृष्टप्रमाणजन्यप्रमाविषयत्वाभावेन रूपादयो दृष्टप्रमाणस्य- न नियतं प्रमेया·। एवमनुमानस्यापि नियतंप्रमेय नास्ति, अनुमेयस्य शब्द प्रमाणेनापि प्रमीयमाणत्वात्। एकैकप्रमाणमात्रगम्यं प्रमेय हि तत्तत् प्रमाणस्य नियत भवति। प्रत्यक्षानुमानयोरेवम्भूत नियतं प्रमेयं नास्ति। प्रत्यक्षा- नुमानयो प्रमेयस्य शब्देनापि ग्रहणात्। तस्मात् "सामान्यतस्तु दृष्टा" दित्यादि कारिकाया अभिप्राय प्रमेयत्रैविध्यानुसारेण प्रमाणत्रैविध्यप्रदर्शनमिति न। नापि एकैकप्रमाणस्य एकैकनियतप्रमेयप्रदर्शनम्। अपितु स्थलविशेषानुरोधेन प्रमाणविशेषकल्पना भवति। इत्येतावन्मात्रप्रदर्शनमुक्तकारिकाभिप्रेतम्। स्थलविशेषानुरोधेनेत्यस्यार्थ प्रमेयविशेषानुरोधेनेत्यपि भवितुमर्हति। स च प्रमेयविशेष एकप्रमाणनियतो भवेदिति तु नियमो नास्ति। स प्रमाणद्वयग्राह्य प्रमाणत्रयग्राह्यो वा भवितुमर्हति। परन्तु यत्र स्थले इतरप्रमाण प्रवृत्तिर्नास्ति, अथ चोपलब्धिर्भवति। तत् स्थलीयप्रमेय एव प्रमेयविशेष। तादृशप्रमेयविशेषानुरोधेन, तत् स्थलानुरोधेन वा साख्याना प्रमाणान्तरकल्पनेति पूर्वोक्तकारिकाभिप्रेत प्रतिभाति। तथाहि यत्र न दृश्यते लिंगम्। नापि श्रूयत आप्तवचनम्। अथचोपलभ्यन्ते रूपादयो विषयास्तत्स्थलानुरोधेन तादृशप्रमेयविशेषानुरोधेन वा स्वीक्रियते प्रत्यक्षप्रमाणम्। एवमाप्तवचनाश्रवणकाले यद्युपलभ्यन्तेऽतीन्द्रियविषया, तदा तादृशप्रमेयविशेषानुरोधेन स्वीक्रियतेऽनुमानं प्रमाणम्। इतरप्रमाणगम्या ये स्वर्ग- नरकादयस्तदनुरोधेन आप्तवचननामकप्रमाणान्तरस्वीकार इत्येवमुक्तकारिकाभि- प्रायवर्णने प्रमाणकल्पनाया· क्रम. प्रदर्शितो न भवति। एकोत्तरमपरप्रमाणकल्पन- मिति प्रमाणकल्पनाक्रमस्तावन्नावश्यक। यदि च तादृशक्रम वस्तुगत्यनुरोधेन स्वीक्रियते तदा प्रथमं यदुक्तंमया "पूर्वपूर्वप्रमाणानामसामर्थ्ये सति प्रयोजनानुरो- धेनोत्तरोत्तरमेकैकप्रमाण साख्यै कल्पित" मिति। तदनुसारेणात्र प्रमाण- स्वीकारक्रम पूर्वोक्तकारिकाभिप्रेतो मन्तव्य.। तत्र च प्रथम स्वत सिद्ध प्रत्यक्षं प्रमाणमसदिग्धमस्ति। तद्धि सर्वप्रमाणोपजीव्यभूतं। कुतस्तस्यागीकार इति चर्चातु नोक्तकारिकाया कृता। तेन प्रत्यक्षप्रमाणेनातीन्द्रियवस्तूनामग्रहणाद् यदा न कार्यनिर्वाहस्तदा प्रत्यक्षोपजीवकानुमान स्वीकृतं साख्यै। एव स्वीकृतेनानुमान- प्रमाणेन प्रत्यक्षविषयाणा सर्वेषा ग्रहणमम्भवेऽपि पूर्वसिद्धोपजीव्यप्रत्यक्षप्रमाणस्य

न कथं तैरंगीकृतानि ? इति प्रश्ने जनानां यदिदं प्रायिकमुत्तरम्—प्रमेयत्रैविध्यानुसारेण स्थलविशेषत्रयानुसारेण वा प्रमाणं त्रिविधमंगीकृतं साख्यैरिति । तदसंगत मन्ये । एतावता साख्यानाप्रमाणत्रैविध्यबीजं श्रौतमिति प्रदर्शितमितरेषा तद्बीजत्व निराकृतमपि । इदानी साख्याभिमतस्य प्रमाणस्य स्वरूपं तावदालोच्यते । साख्या हि बुद्धिवृत्तिविशेषं प्रमाणं मन्यन्ते । बुद्धिवृत्तिविशेष "अयं घट" इत्याद्यकारको ज्ञानरूप । नैयायिकादीना मते इयमेव बुद्धिवृत्ति प्रमा कथ्यते । नैयायिकमते यावत्य. प्रमाणफलभूता प्रमा सन्ति । ता सर्वाअपि प्रमाकरणात्मक प्रमाणरूपा साख्यमते भवन्ति । साख्यमतसिद्धा प्रमाणात्मिका अन्त करणवृत्तय काश्चनन्यायमते प्रमाणरूपाणि अपिक्वचिद् भवन्ति । न तु सर्वा, यथा व्याप्ति-सादृश्य-पद-ज्ञानानि । इत्यनयो प्रमाणस्वरूपविषये मतभेदोऽस्ति । नैयायिक-सम्मतप्रमा-प्रमाणाना गौणप्रमा-प्रमात्वे साख्यैरिष्येते । मुख्यप्रमात्वतुपौरुपेयबोधस्यैव । साख्यमते बुद्धे परिणामद्वयमस्ति, एको विषयाकारेण परिणाम । अपरश्च चिति छायापत्त्या अहमाकारेण तादात्म्याध्यासरूप परिणाम, तत्र च बुद्धिगताधर्माश्चेतनप्रतिबिम्बे प्रतिभासन्ते । एवं च "घटोऽय" मित्याद्याकारो बुद्धेर्विषयाकारेण परिणाम. । द्वितीयश्च घटमहं जानामीत्याद्याकारको बुद्धेरहमाकारेण तादात्म्याध्यासरूप परिणाम । तत्र पूर्वपरिणाम द्वितीयस्य करणभूतं प्रमाणम् द्वितीयश्च तत् फलभूता प्रमा । तदुक्तं योगभाष्ये "फलमविशिष्ट पौरुषेयश्चित्तवृत्तिर्बोध" इति । इयं प्रमा यद्यपि अध्यासरूपा, तथापि अध्यासरूपत्वमस्या शास्त्रमात्रगम्यम् । न तु लौकिकदृष्टचागम्यते । अतोऽस्या शास्त्रीयप्रमात्वविरहेऽपि लौकिकप्रमात्वं निर्विवादम् । तत् करणतया च पूर्वोक्तवृत्तीना प्रमाणत्वमक्षतं मन्तव्यम् ।

इदानी सांख्योक्तत्रिविधप्रमाणानां मध्ये दुरवधारणस्य प्रत्यक्षस्य स्वरूपं किंचिद् विविच्यते । "प्रतिविषयाध्यवसायो दृष्ट" मितीश्वरकृष्णेन साख्यसम्मत प्रत्यक्षस्य स्वरूपं लक्षणं चोक्तम् । तत्र चाध्यवसायशब्दस्य ज्ञानमर्थ. । नतु सर्वं ज्ञानं प्रत्यक्षपदवाच्यमपि तु ज्ञानविशेष प्रत्यक्षपदवाच्यो भवति । स च ज्ञानविशेष कीदृश इत्यभिधातुमीश्वरकृष्णेन "प्रतिविषये"ति विशेषणेन प्रत्यक्षपदवाच्य ज्ञानस्य स्वरूपमुक्तम् । अस्य च समुदितार्थ-विषयसन्निकृष्टेन्द्रियाश्रित ज्ञानं प्रत्यक्षप्रमाणम् । इदं च प्रत्यक्षप्रमाणात्मक ज्ञानं बुद्धेर्धर्म ।

यद्यपि ज्ञानस्य इन्द्रियाश्रितत्वमुक्त, तेनेन्द्रियाश्रितस्य ज्ञानस्य इन्द्रियधर्मत्व मुचितं वक्तुम् । तथापि यथा गृहान्तर्वर्त्तिनो दीपस्य प्रकाशो गवाक्षपथेन विनिर्गत. सन् गवाक्षाश्रितोऽपि दीपधर्म उच्यते । एवमेवात्र वोद्धव्यम् यदस्मिन् देहे



९

# सम्पादकीयम्

वालाना हितकामिनामतिमहापापै पुरोपार्जितै.
महात्म्यात्तमस. स्वयं कलिवलात् प्रायोगुणद्वेपिभि ।
न्यायोऽयं मलिनीकृत कथमपि प्रक्षाल्य नेनीयते,
सम्यग्ज्ञानजलैर्वचोभिरमलं तत्रानुकम्पापरै. ॥

—अकलंकदेव.

कल्याणेच्छुकानामज्ञजनानां पूर्वोपार्जितपापोदयेन गुणद्वेषिभिरेकान्तवादिभिर्न्यायशास्त्र मलिनीकृतम् । करुणावुद्धया प्रेरितेन तन्मलिनीकृतं न्यायशास्त्रं सम्यग्ज्ञानरूपजलेन केनापि प्रकारेण प्रक्षाल्य निर्मलं कर्त्तुं प्रयासो विधीयते ।

न्यायशास्त्रस्य द्वितीयं नामैव प्रमाणशास्त्रमस्ति । प्रमाणशास्त्रस्य भारते पर्याप्तविकासो भूतो विद्यते । गौतम-वात्स्यायनादिभ्य आरभ्य नवमदशमशताब्दपर्यन्तं प्रमाणस्य विकासोऽभवत् । प्रमाणस्य विकासश्रेयो नैयायिकैः वैशेषिकैश्च सह जैन-बौद्ध-विपश्चितामपि वर्तते । ऋते प्रमाणात् कस्यापि दर्शनस्य कार्यं न चलितुं शक्नोति । अतो भारतीयविचारधारायां मूलत' प्रमाणद्वयस्य विकासोऽजायत । प्रथमवर्गीयैर्जनै' वेदान् प्रमाणभूतान् मत्वा वेदविहिततथ्यानीश्वरीयज्ञानानि स्वीकृतानि यै. दर्शनैः वेदा. प्रमाणभूता न स्वीकृताः, तैरपि वीतरागस्य, सर्वज्ञस्य, हितोपदेशिनश्च कस्यापि व्यक्तिविशेपस्य वचनानि प्रमाणभूतान्यङ्गीकृतानि । एवं प्रकारेण भारतीयविचारधाराया व्यक्तिरागमाश्च प्रमाणभूताः स्वीकृता. । यत प्रमाणाभावे लौकिकानि पारलौकिकानि चोभयप्रकाराण्यपि कार्याणि न चलितं शक्नुवन्ति ।

अस्माभिरिद विचारितं यद्भारतीयचिन्तनधारायां प्रमाणस्य विकासः कथमभूत् तथा दार्शनिकैरुत्पत्ति-ज्ञप्ति-प्रामाण्यसम्वन्धे स्वविचारा. कथं स्थिरीकृता —इत्येतस्य सम्पूर्णसंख्यानं तोलनं च प्रस्तोतुं 'मागध' स्य प्रमाणमीमासाङ्क. प्रकाशितो भवेत् । प्रयासेऽस्मिन्नस्माभि. सफलतापि लब्धा । अस्माभिर्येमान्यविद्वासः प्रमाणसम्वन्धिनिवन्धार्थं प्रार्थिता, तै सर्वैरप्यस्माकमनुरोध. स्वीकृतस्तथास्वरचना. सम्प्रेष्य वयमनुकम्पिता. । अतोऽस्माकं विश्वासोऽस्ति यत् प्रमाणसम्वन्ध

रन्ध्राणीव इन्द्रियाणि सन्ति। दीप इव देहमध्ये च बुद्धितत्त्वमस्ति। प्रदीपप्रभा इव बुद्धिप्रभा इन्द्रियद्वारेण विनिर्गच्छन्ति। एव इन्द्रियद्वारा विनिर्गतबुद्धितत्त्व तत् प्रभा वा यदा विषयाकारेण परिणमते। स च परिणामस्तदा बुद्धिधर्मोऽपि इन्द्रियाश्रित उच्यते। तस्यापर नाम ज्ञानमिति। तदिद ज्ञानं प्रत्यक्षं प्रमाणम्। अन्यच्च यदस्ति बुद्धितत्त्वस्य विषयाकारेण परिणामरूप ज्ञानमनुमित्यादिरूपम्। तत् सर्वं नोक्तप्रकारेणेन्द्रियाश्रित भवतीति न तत् ज्ञान प्रत्यक्षप्रमाणपदाभिलप्य भवति। एतावता सिद्धमिद यत् साख्यमते विषयसम्बद्धेन्द्रियाश्रितबुद्धिवृत्ति· ज्ञानापरपर्य्याया प्रत्यक्षप्रमाणमिति। अस्य च प्रत्यक्षप्रमाणस्य किम् फलमित्यपि तत्त्वकौमुदीकारेणोक्त, तदिह किंचिद् आलोच्यते, प्रमाणफल सर्वत्रप्रमा पौरुषेय-बोध इत्युक्तमस्माभि पूर्वम्। स एव च पौरुषेयबोध चेतनाशक्तेरनुग्रह, नैयायिकमते च एतादृशचेतनाशक्त्यनुग्रहरूपपौरुषेयबोधः सर्वत्र नावश्यम्भावी साख्यमते तु सर्वत्राय पौरुषेयबोध आवश्यक। तथाहि साख्यमते सर्वे व्यापारा प्राकृता पुरुषोपभोगार्था। उपभोगश्च पूर्वोक्त पौरुषेयबोध एवेति चेतनाशक्ते-रनुग्रहरूपपौरुषेयबोधाभावे बुद्धिव्यापाराणा ज्ञानादीना साख्यमते निष्प्रयोजनत्वमा-पद्यते। इति सर्वत्र "घटोऽय'मित्याकारकचित्तवृत्तेरनन्तरं साख्यमते "घटमहं जानामी" त्याद्याकारक उपभोगरूप पौरुषेयबोध आवश्यक इत्यलम्।



# सम्पादकीयम्

वालाना हितकामिनामतिमहापापै पुरोपार्जितैः
महात्म्यात्तमस. स्वयं कलिवलात् प्रायोगुणद्वेषिभि ।
न्यायोऽयं मलिनीकृत कथमपि प्रक्षाल्य नेनीयते,
सम्यग्ज्ञानजलैर्वचोभिरमल तत्रानुकम्पापरै ॥

—अकलंकदेवः

कल्याणेच्छुकानामज्ञजनानां पूर्वोपार्जितपापोदयेन गुणद्वेषिभिरेकान्तवादिभिर्न्यायशास्त्र मलिनीकृतम् । करुणावुद्धया प्रेरितेन तन्मलिनीकृतं न्यायशास्त्रं सम्यग्ज्ञानरूपजलेन केनापि प्रकारेण प्रक्षाल्य निर्मलं कर्त्तुं प्रयासो विधीयते ।

न्यायशास्त्रस्य द्वितीयं नामैव प्रमाणशास्त्रमस्ति । प्रमाणशास्त्रस्य भारते पर्याप्तविकासो भूतो विद्यते । गौतम-वात्स्यायनादिभ्य आरभ्य नवमदशमशताब्दपर्यन्तं प्रमाणस्य विकासोऽभवत् । प्रमाणस्य विकासश्रेयो नैयायिकैः वैशेषिकैश्च सह जैन-बौद्ध-विपश्चितामपि वर्तते । ऋते प्रमाणात् कस्यापि दर्शनस्य कार्यं न चलितु शक्नोति । अतो भारतीयविचारधाराया मूलत. प्रमाणद्वयस्य विकासोऽजायत । प्रथमवर्गीयैर्जनै वेदान् प्रमाणभूतान् मत्वा वेदविहिततथ्यानीश्वरीयज्ञानानि स्वीकृतानि यै दर्शनै वेदाः प्रमाणभूता. न स्वीकृताः, तैरपि वीतरागस्य, सर्वज्ञस्य, हितोपदेशिनश्च कस्यापि व्यक्तिविशेषस्य वचनानि प्रमाणभूतान्यङ्गीकृतानि । एवं प्रकारेण भारतीयविचारधाराया व्यक्तिरागमाश्च प्रमाणभूता. स्वीकृताः । यत प्रमाणाभावे लौकिकानि पारलौकिकानि चोभयप्रकाराण्यपि कार्याणि न चलित शक्नुवन्ति ।

अस्माभिरिदं विचारितं यद्भारतीयचिन्तनधाराया प्रमाणस्य विकासः कथमभूत् तथा दार्शनिकैरुत्पत्ति-ज्ञप्ति-प्रामाण्यसम्वन्धे स्वविचारा कथं स्थिरीकृता.—इत्येतस्य सम्पूर्णसंख्यानं तोलनं च प्रस्तोतुं 'मागध' स्य प्रमाणमीमासाङ्क प्रकाशितो भवेत् । प्रयासेऽस्मिन्नस्माभि सफलतापि लब्धा । अस्माभिर्येमान्यविद्वासः प्रमाणसम्वन्धिनिवन्धार्थं प्रार्थिता, तै सर्वैरप्यस्माकमनुरोध स्वीकृतस्तथास्वरचना. संप्रेष्य वयमनुकम्पिता । अतोऽस्माक विश्वासोऽस्ति यत् प्रमाणसम्वन्ध

एतादृशी शोधसामग्री सस्कृतभाषायामन्यस्या वा भाषाया न लप्स्यते। प्रयासेऽस्मिन् यद्यपि कश्चिदधिकस्समयो व्यतीत । अत एव मागधस्यैष उदय न समयेऽभवत् तथा वर्षाकालीनपयोधरै मागधस्योदय अच्छादित । अतो विलम्ब्यैवैषोऽङ्क पाठकाना करकमलयो प्राप्यमानोऽस्ति।

प्रमाणस्य परिभाषा ददत् वात्स्यायनो लिखितवान्—प्रमाता येनार्थं प्रमिणोति ,तत् प्रमाणम्[1]' व्युत्पत्ति-दृष्ट्या स्वभाव-निरूपणमपि वात्स्यायनेन कृतम्। स लिखितवान्—अत्र प्रमीयतेऽनेनेति व्युत्पत्तिर्द्रष्टव्या। प्रमाणस्य स्वभा-वस्तु सत प्रकाशकं प्रमाणमसदपि प्रकाशयति।[2]" प्रमाणस्य लक्षणं वदता गौतमेन व्यलेखि—"तच्च तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानकारणत्वम् यद्वा अनुभवत्वव्याप्यजात्यवच्छिन्नप्रमावृत्तिकार्यतानिरूपितकारणताशालित्वे सति व्यापारवत्वम्। तच्च गृहीतग्राहीतरानुभवकारणत्वम्—इति मीमासका आहु । स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्त्तिस्वासमानाकारनिश्चयविषय-विषयकेतरतद्वद्विशेष्यकतत्प्रकारकानुभवकारणत्वम् इतियावत्"[3] एवविधप्रमाण-विचारारम्भो गौतमकणादादुत्तरोत्तर विकसितोऽभवत्। साख्यदर्शने कपिल कणादलक्षण लिखन्नब्रवीत्—"द्वयोरेकतरस्य वाप्यसन्निकृष्टार्थपरिच्छित्ती प्रमातत् साधक तत्त्रिविध प्रमाणम्[4]।" वस्तुयावत् बोधे नायाति तावत् तत् असन्निकृष्टम-सम्बद्ध वा कथ्यते। असन्निकृष्टस्यवस्तुन इन्द्रियादिभि सन्निकृष्टत्वात् बुद्ध्या-रूढत्वाद्वा, यस्तद्वस्तुन परिच्छेदइयत्ताया धारण स्वरूपनिश्चयो वा भवति, स एव परिच्छेदोऽथवावधारणप्रमोच्यते। प्रमा प्रमातृपुरुषस्याथवा बुद्धे धर्मोऽस्ति, यस्तद्वस्तुनिश्चयकारिण्या प्रमाया साक्षात्कारकोऽथवा जनको विद्यते, तदेव प्रमाणं कथ्यते। वस्तु यावदिन्द्रियै सयुक्त न भवति, तावत् तदसन्निकृष्ट भवति तथेन्द्रियसयुक्ते सति सन्निकृष्टं जायते। अर्थात् तत् एतद्रूपे तथामुक इत्याकारेऽवधृत भवति। सोऽध्यवसायोऽथवाबुद्धिविकासो विशेषप्रमानाम्ना प्रसिद्धोऽस्ति। एव प्रकारेण प्रमाज्ञान साक्षात्सम्बन्धेयद्द्वारेणोत्पन्न भवति, तन्नाम प्रमाणमस्ति, तथा प्रमाणद्वारेणैव वस्तुपरीक्षा भवति। अधुना प्रश्न एषउत्पद्यते यत् प्रमाण कियत्प्रकारमस्ति ? एकप्रकारमनेकप्रकार वा ? एतदुत्तरे त्वेतदेव

---

१ वात्स्यायन १।१।१

२ वात्स्यायन १।१।१

३ न्यायकुसुमाञ्जलि ३ तथा तर्कप्रकाश , खण्ड ४ पृ० ९।

४ साख्यसूत्रम् १।८७।

वक्तुं शक्यते यत् यदा वस्तु नानाप्रकारमस्ति, तदा तदवस्था अप्यनेकप्रकारा. सन्ति। सत्यतीतेऽनागते वर्तमाने च, स्थूलसूक्ष्म-दृश्यादृश्यपदार्थपरिपूर्णवहुगुणयुक्त-जगत परीक्षार्थ, यदेकमात्रं प्रमाणं स्थास्यति, तदसम्भवमस्ति। जगत. किमपि वस्त्वखण्डदण्डायमानं नास्ति। सत्येकस्मिन् परीक्षासाधके पदार्थे, यस्मिन् काले परिक्षितव्यं वर्तमानमस्ति, तस्मिन् समये परीक्षा-साधिका सामग्री स्थास्यत्यपि नवा स्थास्यति तथा यस्मिन् समये परीक्षासाधकं प्रमाण विद्यमानमस्ति, तदानी परीक्षितव्यं वस्तु न वा स्थास्तु शक्नोति। एवंविधौ परीक्षाऽप्रतिष्ठिता भवति। अप्रतिष्ठितत्वदोषपरिहारार्थमेक एतादृश. पदार्थ स्वीकार्योऽस्ति, यस्त्रिषु काले-ष्वप्यवस्थाय्यस्ति। प्रमाणेसत्येकविधे त्रैकालिकी परीक्षा न सिद्ध्यति सुतरा वर्तमानपरीक्षायै यथा सर्वसम्मतस्य प्रत्यक्षस्योपरिस्थितिरस्ति तथैवातीताना गतपरोक्षार्थं प्रमाणान्तरसद्भाव आवश्यको विद्यते। परीक्षाकार्यं जगदन्तपाति स्वीकरणीय भविष्यति। अन्यथा जगदसम्पूर्णताया आपत्तिर्भविष्यति। अत एतत्कथनं स्वीकरण वोचितमस्ति यत् जगतो व्यवस्था पदार्थाश्च यथानेकविधा. तथैव तद्ग्राहकप्रमाणान्यप्येनकविधानि सन्ति।

प्रमाणसख्या कियत्यस्ति, अत्रमतभेद संभाव्यते। कश्चन प्रमाणमेकंमनुते कश्चन द्वे, कश्चन त्रीणि, कश्चन चत्वारि कश्चन पञ्च कश्चन षट् स्वीकरोति वेदान्तकारिकया लिखितमस्ति—

प्रत्यक्षमेकं चार्वाका. कणादसुगतौ पुन.।
अनुमानञ्च तच्चापि साख्या शब्दञ्च ते उभे॥
न्यायैकदेशिनोऽप्येवमुपमानञ्च केवलम्।
अर्थापत्त्या सहैतानि चत्वार्याहु प्रभाकरा॥
अभावषष्ठान्येतानि भट्टा. वेदान्तिनस्तथा।
सम्भवैतिह्ययुक्तानि इति पौराणिका. जगु॥[1]

न्यायदर्शने प्रमाणविषय. विस्तारपूर्वक आयातोऽस्ति। महर्षिगौतमेन स्व-प्रणीते गौतमसूत्रे षोडशपदार्था स्वीकृता सन्ति, तेषु प्रमाणस्य प्रथमं स्थान-मस्ति। यत प्रमाणद्वारेणैवान्यपदार्थाः स्थिरा क्रियन्ते।

गौतमेन चत्वारि प्रमाणानि स्वीकृतानि—"प्रत्यक्षानुमानोपमानशब्दा प्रमा-णानि"[2] प्रमाण-शब्द: प्र + मा + ल्युटा—निष्पन्नोऽस्ति। अत्र प्रोपसर्गोविद्यते

१ वेदान्तकारिका।

२. गौतमसूत्रम् १।१।३।

'मा' धातुरस्ति तथा 'ल्युट्' प्रत्ययो वर्त्तते। प्रोपसर्गक 'मा' धातोरर्थो यथार्थ-ज्ञान तथा 'ल्युट्' प्रत्ययस्यार्थ करणमस्ति। श्रयो मिलित्वा प्रमितिक्रियाया करणस्य वोध कुर्वन्ति। एतदेव प्रमाण कथ्यते। कार्यमात्रमेव कर्त्तास्ति तथा करणस्यापेक्षा कर्त्ता विद्यते। असति कर्त्तरि करणे च किमपि कार्य न भवितु शक्नोति। वस्त्रादिकार्यस्य कर्त्ता तन्तुवायोऽस्ति तथा तुरीवेमादीनि तत्करणानि सन्ति। तथैव ज्ञानमप्येक कार्यं विद्यते तथा तस्या कर्त्तु करणस्य च सद्भावो-ऽवश्यमेवास्ति, यद्यत्नेन कार्य जायते, स कर्त्ता कथ्यते। यस्य व्यापारानन्तरमेव कार्यमुत्पद्यते, तत्करणमस्ति। आत्मनो यत्नवत् ज्ञानमुत्पद्यते। अत एव ज्ञानस्य कर्त्ताऽऽत्मा विद्यते। इन्द्रिय-व्याप्तिज्ञाने व्यापारानन्तरमुत्पद्येते। अतएवेन्द्रियाणि व्याप्तिज्ञानञ्च ज्ञानकरणानि सन्ति। एतज्ज्ञानकरणमेवप्रमाणमस्ति। प्रमाण चतु प्रकारकमस्ति—प्रत्यक्षानुमानोपमानशब्दा। तर्कभाषाया स्पष्टमेवोक्तम्—"चक्षुरादि-प्रत्यक्षात्मकप्रमाया प्रमाणम्। अनुमितौ च लिङ्गदर्शन प्रमाणम्। उपमितौ च सादृश्यज्ञानं प्रमाणम्। शब्दे च वेदा प्रमाणमित्यादौ शब्द प्रमा-णम्। अत्रेद वोध्यम्। इन्द्रियसयोगादिरेव प्रमाकरणम्। न तु प्रमातृप्रमेया-दीनि। सत्यपि प्रमातरि प्रमेये च प्रमानुत्पत्ते। इन्द्रियसयोगादौ तु सत्य-विलम्बेन प्रमोत्पत्ति। अत इन्द्रियसयोगादिरेव करणम्, न प्रमात्रादि"।[1] भाट्ट-मतावलम्बिभिरनधिगतार्थज्ञान प्रमाणमुक्तम्। तेषामभिमतमस्ति—अनधि-गतार्थगन्तृप्रमाणम्—इति भट्ट मीमासका आहु। तदसत्, एकस्मिन्नेव घटे घटो-ऽयम्, घटोऽयम्, घटोऽयम्, इति धारावाहिकप्रत्ययस्थलेऽधिगतार्थगन्तॄणाम-प्रामाण्यापत्ते।"[2]

वस्तुत प्रमाणलक्षणेनाविसंवादिना भाव्यम्। अनधिगतार्थगम अज्ञातार्थनिश्चा-यक ज्ञान वा न प्रमाणमस्ति। यतो धारावाहिकज्ञानेऽपि—अनधिगतार्थवोधो जायते। अत सोऽपि प्रमाण भविष्यति। अतएव केवलमनधिगतार्थस्याधिगतविधान प्रमाण न भवितु शक्नोति। प्रमाणार्थमविसंवादित्वभवनमावश्यकमस्ति। यज्ज्ञान स्व-पर-स्वरूपयो प्रकाशनेऽविसवादि वर्त्तते, तदेव प्रमाण भवितु शक्नोति। द्वितीयोनियम एषोऽस्ति यत् ज्ञानमपूर्वविषयज्ञातृ भवेत्। यदपूर्व न वेत्ति, तज्ज्ञान प्रमाण न भवितुमर्हति। यद्येतन्मन्येत यत् 'दृष्टोऽपिसमारोपात्तादृक्' अर्थात् अनधिगतार्थ-ज्ञानमेव प्रमाणलक्षण नास्ति। किन्तु, वस्त्वधिगतमनधिगतं वा स्यात्, यदि तदनि-

---

१ तर्कभाषा, पृ० ५।

२ सिद्धान्त-चन्द्रिका १, पृ० २०।

र्दोपरूपेण जानाति, तदा नास्ति दोप । एष प्रश्न संपत्स्यते यत् अर्थे ज्ञानं किं करोति, यत्तत्प्रमाण मन्येत । एतद्ुत्तरमस्ति यत् विशिष्टज्ञानजनकत्वात् तत् प्रमाणं मन्यते । यत्र तत् विशिष्टज्ञानं न कारयति, तत्र तदप्रमाणमस्ति । यदि सर्वथानधिगतार्थ गन्तैव प्रमाणमन्येत तदा प्रामाणप्रमाण्यनिश्चयोऽपि शक्यो न भवेत् । यतो ज्ञानेन यद्रूपार्थो ज्ञातः यदि तद्रूपार्थ एवार्थो भवति तदा तज्ज्ञानं प्रमाण कथ्यते तथैत-न्निर्णय सवादज्ञानेन भवति । तत्संवादज्ञानं तदर्थज्ञानात्पश्चात् भवति । इदानी यदि अनधिगतार्थस्याधिगन्तैव प्रमाण मन्येत तदा संवादज्ञानं प्रमाण न भवति । यतः तत्तु पूर्वज्ञानगृहीतार्थमेव गृह्णाति तथा यदि तत्स्वयमेवाप्रमाण स्वीक्रियते, तदा ततः प्रथमज्ञान प्रामाण्यं कथ स्यातुमर्हति । यदा सामान्यविशेष्ययोस्तादात्म्य-सम्बन्धो मन्यते तदा प्रमाण सर्वथानधिगतार्थस्यैव ग्राहि भवितुं शक्नोति । यत वस्तुनि सम्प्रति यदस्तित्वमस्ति, तत्पूर्वास्तित्वादभिन्नमस्ति, तथा पूर्वास्तित्वं पूर्वमेव ज्ञातमस्ति । अस्तु, यदि कर्हिचित् अनधिगतार्थस्य ग्राहिज्ञान प्रमाण मन्यते, तदा नोदेति काचनापद् । एव प्रकारेणानधिगतार्थगन्तृत्वं-प्रमाणममत्वा स्वार्थव्यवसा-यात्मक ज्ञान प्रमाण मन्येत । तदुक्तम्—

"तत्रापूर्वार्थज्ञानं निश्चितं बाधवर्जितम् ।
अदुष्टकारणारब्धं प्रमाण लोकसम्मतम् ॥

अतएव सक्षेपेण स्वापूर्वार्थव्यवसायात्मक ज्ञान प्रमाण भवति प्रमाणत्वात् । यत्तु स्वापूर्वार्थव्यवसायात्मक ज्ञानं न भवति, न तत्प्रमाणम्, यथा सशयादिर्घ-टादिश्च । प्रमाणञ्च विवादापन्नम् । तस्मात् स्वापूर्वार्थव्यवसायात्मकं ज्ञानमेव भवतीति । न च प्रमाणत्वमसिद्धम्, सर्वप्रमाणस्वरूपवादिना प्रमाणसामान्ये विप्रति-पत्त्यभावात्, अन्यथा स्वेष्टानिष्ट-साधन-दूषणायोगात् [1] ।"

प्रमाणव्युत्पत्तिरेवविधास्ति—प्रकर्षेण संशयादिव्यवच्छेदेन मीयते परिच्छि-द्यते वस्तुतत्त्वं येन तत्प्रमाणम् । तस्य च ज्ञानमिति विशेपणमज्ञानरूपस्य सन्निकर्षा-देर्नैयायिकादिपरिकल्पितस्य प्रमाणत्वव्यवच्छेदार्थमुक्तम् । तथा ज्ञानस्यापि त्वसंवेदने-न्द्रियमनोयोगिप्रत्यक्षस्य निर्विकल्पकस्य प्रत्यक्षत्वस्य प्रामाण्यं सौगतैं परिकल्पितम्, तन्निरासार्थंव्यवसायात्मकग्रहणम् तथा वहिरर्थापह्नोतृणा विज्ञानाद्वैतवादिना पश्य-तोहराणा शून्यैकान्तवादिनाञ्च विपर्यासव्युदासार्थमर्थग्रहणम् । अस्य त्वापूर्वविशेषण गृहीतग्राहिधारावाहिज्ञानस्य प्रमाणतापरिहारार्थमुक्तम् । तथा परोक्षज्ञानवादिना मीमासकानामस्वसंवेदनज्ञानवादिना साख्यानां ज्ञानान्तरप्रत्यक्षज्ञानवादिना यौगा-

१. प्रमेयरत्नमालायाम्, पृ० १६ ।

नाञ्च मतमपाकर्त्तुं स्वपदोपादानम् । इत्यव्याप्त्यतिव्याप्त्यसम्भवदोषपरिहारात् सुव्य-वस्थितमेव प्रमाणलक्षणम् । अस्य च प्रमाणस्य यथोक्तलक्षणत्वे साध्ये प्रमाणत्वा-दिति हेतुरत्रैव द्रष्टव्य , प्रथमान्तस्यापि हेतुपरत्वेन निर्देशोपपत्तेः प्रत्यक्ष विशद ज्ञानमित्यादिवत् ।[1]"

एतदनुमाने प्रमाणविशेषस्य धर्मिस्वीकारे तथा प्रमाणसामान्यस्य हेतुस्वीकारे साध्यस्य सिद्धि सञ्जायते । प्रमाणेन हितस्य प्राप्तिरहितस्य परिहारो जायते तथैतज्ज्ञानद्वारेणैव सम्भवमस्ति । अतोज्ञानमेव प्रमाणमस्ति ।

प्रयोग —प्रमाण ज्ञानमेव हिताहितप्राप्तिपरिहारसमर्थत्वात् यत्तु न ज्ञान तन्नहिताहितप्राप्तिपरिहारसमर्थं हिताहितप्राप्तिर्यथा घटादिहिताहितप्राप्तिपरिहार-समर्थनञ्च विवादापन्न ज्ञान तस्माज्ज्ञानमेव प्रमाण भवतीति ।

प्रभाकरोऽनुभूतिमेव प्रमाण मनुते । तस्याभिमतमस्ति यत् "अनुभूतिरपि प्रमाणम्" एव प्रकारेण प्रमाणलक्षणसम्बन्धे विचारेणावगम्यते यत् ज्ञानस्यैव प्रमाणत्वस्वीकृतिरधिकतर्कसगतास्ति । इन्द्रिय-सन्निकर्षकारकसाकल्यादीना प्रमाण-त्वाधिगमेऽनेकविधा विप्रतिपत्तय आयान्ति । अत ज्ञानमेव प्रमाणमिति निश्च प्रचम् ।

## प्रामाण्यविचार —

प्रमाणस्य प्रमाणता-सम्बन्धे विचारेणावगम्यते यत् किमपि ज्ञान प्रमाणमस्ति, किमप्यप्रमाणमस्ति-एतत्कथ ज्ञातु भवेत् । अर्थात् प्रामाण्यस्योत्पत्ति ज्ञप्तिश्च स्वत भवत परतोवा । स्वतः प्रामाण्यवादिमीमासकानामतमस्ति यत् प्रमाणस्यार्थस्य ज्ञानरूपा शक्तिरथवार्थज्ञानरूपा क्रिया प्रामाण्य कथ्यते । तत् प्रामाण्य ज्ञानमात्रो-त्पादयित्र्या साम्ग्र्या उत्पद्यते । तदर्थं तत्सामग्र्यतिरिक्तस्यान्यस्य कस्याप्याव-श्यकता नास्ति । अस्यैव नाम स्वत प्रामाण्यमस्ति । तथार्थस्य यथारूपज्ञानशक्तिः प्रामाण्यमस्ति तथा शक्तय पदार्थेषु स्वयमुत्पन्ना भवन्ति । ता उत्पादककारणा-धीना न सन्ति । कथितमस्ति—

"स्वत सर्वप्रमाणाना प्रामाण्यमिति गम्यताम्,
नहि स्वतोऽसती शक्ति कर्तुमन्येन पार्यते ।[2]"

अर्थात् सर्वप्रमाणाना प्रमाण स्वतोभवति । यतो या शक्ति स्वयमविद्यमाना

१ प्रमेयरत्नमाला पृ० १४, १५ ।

२. मीमासाश्लोकवार्तिकम्, श्लोक २-४७ ।

भवति, ता नान्य' कश्चनोत्पादयितुं शक्नोति । तात्पर्यमेतदस्ति यत कार्ये वर्त्तमानो यो धर्म कारणे तिष्ठति, स कार्यवत् तस्मात्कारणादेवोपपद्यते । यथा मृत्पिण्डे विद्यमानरूपादि' तदुत्पन्ने घटेऽपि प्राप्यते । ते मृत्पिण्डादेवघटे गच्छन्ति, किन्तु ये धर्माः कार्ये लभ्यन्ते कारणे च न लभ्यन्ते, ते धर्मा.कारणात् न जायन्ते, किन्तु स्वत एव भवन्ति । यथा—घटे जलादानशक्तिरस्ति । एषा शक्तिः मृत्पिण्डे नास्ति । अत इयं शक्ति घटे स्वयमुत्पन्ना जायते । एवमेव ज्ञानेऽपि यथार्थ-रूपेणार्थावबोधशक्तिरस्ति । एषा शक्ति ज्ञानोत्पादकेषु नेत्रादिकारणेषु न प्राप्यते । अत इयं तेभ्यो नोत्पद्य स्वयं प्रभवति । कथितमस्ति—

"आत्मलाभे हि भावाना कारणापेक्षिता भवेत् ।
लब्धात्मना स्वकार्येषु प्रवृत्ति स्वयमेव तु ॥[1]

अर्थात् पदार्थानामुत्पत्तावेव कार्यापेक्षा भवति । यदा ते उत्पन्ना जायन्ते, तदा ते स्व-स्वकार्येषु स्वत प्रवृत्ता भवन्ति । अत प्रामाण्योत्पत्तौ गुणादीनामपेक्षा न भवति । एवमेवार्थावबोधरूपप्रमाणकार्येऽपि प्रामाण्यग्रहणापेक्षा नास्ति । यत प्रमाणप्रामाण्यग्रहण विनैव ततोऽर्थबोधो जायते । यद्येवं कथ्येत यत् प्रमाणे प्रामाण्यं संवादज्ञानेन गुणज्ञानेनाथवार्थक्रियाज्ञानेन प्रमाणप्रामाण्य निश्चीयते तदानवस्था-द्यनेकदोषा जायन्ते । यत उक्तज्ञानद्वारेण प्रथमज्ञाने प्रामाण्यनिश्चये सति तज्ज्ञा-नाना प्रामाण्यस्य निश्चयोऽन्यसवादज्ञानेन, गुणज्ञानेन, अर्थक्रियाज्ञानेन सपत्स्यते । यदि संवादज्ञानगुणज्ञानार्थक्रियाज्ञानप्रामाण्यनिश्चयोऽन्यसवादज्ञानादि विनैव स्वत-एव जायते, तदा प्रथमज्ञानस्य प्रामाण्यनिश्चयेऽपि स्वत एव जायमाने कापत्ति ? अत प्रामाण्य स्वत एव जायते ।

अप्रामाण्यं परतो जायते, यतोऽप्रामाण्योत्पत्ति ज्ञानसामान्यस्योत्पादककारणा-तिरिक्तात् दोषनामककारणात् जायते । अप्रामाण्यस्य त्रयो भेदा सन्ति—सशय , विपर्यय , अज्ञानम् । एतेष्वज्ञानन्त्वज्ञानाभावस्वरूपमस्ति । अत तत् स्वय जायते। तस्मिन् नास्ति कस्याप्यपेक्षा । सशये विपर्यये च ज्ञान ज्ञातु मनस स्थिरता, इन्द्रि-याणा दुष्टकारणत्वम्, पदार्थाना चाञ्चल्यं—इमे सर्वे दोषा यथासम्भव कार-णानि भवन्ति । अत प्रामाण्योत्पत्ति स्वतोभवति तथाऽप्रमाण्यस्योत्पत्ति परतो जायते ।

केचन विचारका मीमांसकस्यानेन मतेन सप्रतिपन्ना न सन्ति । तेऽभ्यास-दशाया प्रामाण्योत्पत्ति स्वतस्तथाऽनभ्यासदशाया परतो मन्वते । एतदेवाप्रामाण्य-

१. मीमासाश्लोकवार्तिकम् २-४८ ।

स्य सम्बन्धेऽपि कथनमस्ति । यत्र ज्ञानवस्तुनि प्रवृत्तौ बाधककारणान्युत्पद्यन्ते तत्र परत प्रामाण्यस्योत्पत्तिर्भवति । तथा स्थाने परिचितादौ स्वत प्रवृत्तौ प्रामाण्योत्पत्ति स्वतो मन्यते । अभ्यस्तार्थोऽस्ति परिचितग्रामतटजलादि । तथाऽपरिचितग्रामजलतटादयोऽनभ्यस्ता सन्ति ।

मीमासक प्रामाण्यज्ञप्तिमपि परतो मनुते । ज्ञप्तेरर्थोऽस्ति ज्ञानप्रामाण्यनिश्चय यदेतज्ज्ञान प्रमाणमस्ति । अतस्तत् विना निमित्त न भविष्यति । यत यत् कादाचित्क भवति, तद् विना किमपि निमित्तं न भवति, यथा गृहादि । तथा यस्य निश्चय केनाप्यन्यनिमित्तेन क्रियते तत् स्वत कथ वक्तु शक्यते । एवमेव प्रमाणस्य स्वकार्ये प्रवृत्तिरपि स्वतो न भवति । यत प्रमाणकार्य पुरुषप्रवृत्तिरस्ति, अर्थपरिच्छेदो वा ? एतेषु प्रमाण पुरुषप्रवृत्तौ हेतुस्तदैव भवितु शक्नोति, यदा तत्प्रामाण्यनिश्चयो भवेत् । यथाऽप्रमाण्ये निश्चिते तत् निवृत्तौ हेतु जायते, तथैव प्रामाण्यनिश्चये जाते प्रमाणप्रवृत्तौ हेतुर्जायते । ये बुद्धिमन्तो भवन्ति, ते आवश्यकता मात्रे जाते एव कस्मिँश्चिद्विषये प्रवृत्ता न भवन्ति । अत प्रामाण्यज्ञप्ति परतो भवति ।

एतस्य मतस्य समीक्षापि दार्शनिकै कृता । आशय एषोऽस्ति यत् मीमासका प्रमाणस्य प्रमाणता स्वतो मन्वते तथाऽप्रमाणस्य परत । साख्या प्रमाणता परतस्तथाऽप्रमाणता स्वतो मन्वते । नैयायिका प्रमाणता तथाऽप्रमाणतामुभेऽपि परत मन्वते । प्रामाण्येन तस्य यथार्थतारूपाया सत्यताया , अप्रमाणतया च तस्यायथार्थतारूपायाअसत्यताया ग्रहण भवति । मीमासका वेदज्ञानस्य प्रमाणत्वेन तस्य प्रामाण्यता स्वत स्वीकुर्वन्ति । यतोऽन्वयव्यतिरेकद्वारेण त्रिरूपलिङ्गेन पक्षधर्मत्व - सपक्षधर्मत्व - विपक्षातिव्यावृत्तिरूपकेवलहेतो प्रमाणतोत्पद्यमाना दृश्यते । यथेद जलमस्तीत्यादिप्रकारकप्रत्यक्षज्ञाने तस्य स्वकारणादेव प्रमाणतोत्पद्यते, एव मन्तव्यम् । अन्यथा न । तथागमेऽपि गुणाना सद्भाव न ज्ञायते । यद्यप्यागम आप्तद्वारेणकथनमेषगुणो विद्यमानोऽस्ति, तथाप्यागमे प्रमाणता तद्गुणकारणान्नास्ति, किन्त्वागमे गुणैर्दोषाभावोऽस्ति तथा दोषाभावेन सशयविपर्ययरूपाप्रमाणस्य प्रभावोऽस्ति । अतएवागमप्रमाणता स्वाभाविकरूपेणाबाधिता सिद्ध्यति ।

## प्रमाणभेदा

प्रमाणस्य प्रत्यक्षानुमानोपमानकल्पाश्चत्वारो भेदा लभ्यन्ते । गौतमात्पूर्वमपि

[1]ऐतिह्यार्थापत्तिसम्भवाभावानामेषां चतुर्णां स्पष्टरूपेणोल्लेखो मिलति। परवर्त्ति-विचारकैः ऐतिह्यस्य शब्दे तथान्यत्रयाणामनुमानेऽन्तर्भावो[2] विहितः। प्रशस्तपादेन प्रत्यक्षानुमानयो द्वयोरेव प्रमाणयो समर्थनं कुर्वतोल्लिखितशब्दादिप्रमाणानामन-योरेव द्वयो समावेश कृतस्तथा चेष्टानिर्णयार्ष (प्रातिभ) सिद्धदर्शनानामप्येष्वे-वान्तर्भावो व्यधायि।

प्रशस्तपादात्पूर्वं कणादेन प्रत्यक्षानुमानातिरिक्तानामन्यप्रमाणाना कापि सम्भा-वनाथवा गौतमवत् तत्समावेशचर्चा नाकारि। एतेन प्रतीयते यत् प्रमाणस्योक्त-भेदयोः मान्यता प्राचीनास्ति चार्वाकस्य केवलानुमानसमीक्षणेन तथा केवलैक-प्रत्यक्षसमर्थनेनापि एतदेव ज्ञायते। अस्तु, एतावत् तथ्यमस्ति यत् प्रत्यक्षानुमाने द्वे वैशेषिकै तथा बौद्धै, प्रत्यक्षानुमानशब्दाश्च त्रीणि प्रमाणानि साख्यै, उपमान-सहितानि चत्वारि नैयायिकै, तथार्थापत्त्यभावसहितानि प्रमाणानि जैमिनिमीमासकै स्वीकृतानि। यथा—

> जैमिनेः षट् प्रमाणानि चत्वारि न्यायवादिन,
> साख्यस्य त्रीणि वाच्यानि द्वे वैशेषिक-बौद्धयो।

जैमिनिसम्प्रदायस्य द्वौ भेदौ स्त (१)—भाट्ट (२) प्रभाकरौ। भाट्टै षट् प्रमाणानि स्वीकृतानि, पर प्रभाकरैरभाव परित्यज्य शेषपञ्चैवाङ्गीकृतानि। अतएव भाट्टमीमासका षट् प्रमाणवादिरूपेण तथा प्रभाकरा पञ्चप्रमाणवादिरूपेण विश्रुता सन्ति।

प्रमाणस्य विकसितरूपणि-अक्षपाद-वात्स्यायन-उद्योतकर-वाचस्पति-जयन्तभट्ट-उदयन-श्रीकण्ठ-गङ्गेश-वर्धमान-उपाध्याय-विश्वनाथ-प्रभृतीना ग्रन्थेषु प्राप्यन्ते। नैतावदेव, प्रशस्तपद-शाठल-कुमारिलसपाशातिरिक्तै वसुबन्धु-दिङ्नाग-धर्मकीर्त्ति-प्रज्ञाकर-शान्तरक्षित - समन्तभद्रसिद्धसेन - पात्रस्वामि-अकलङ्क-विद्यानन्द-माणिक्य नन्दि-प्रभाचन्द्र-हरिभद्र-हेमचन्द्रादिभिरपि प्रमाणस्वरूपे,प्रामाण्योत्पत्तौ, तज्ज्ञप्तौ प्रमाणभेदेषु च विचारो विहितो विद्यते।

---

१ न चतुष्ट्वम्, ऐतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्। शब्द ऐतिह्यानर्थान्तर-भावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेध।

न्यायसूत्रम् २।२।१, २

२ शब्दादीनामप्यनुमानेऽन्तर्भावः समानविधित्वात्।

—प्रशस्त पादभाष्यम् पृ० १०६–१११

प्रमाणविषयेविशेषविचारः

पूर्वं मया प्रमाणस्य सामान्यविचारो विहित, इदानीमत्र प्रमाणस्य विशेष-विचार आवश्यकोऽस्ति। सर्वप्रथम मया नैयायिकाभिमतसन्निकर्षप्रमाणवादोपरि विचारो विधीयते।

सन्निकर्षप्रमाणवाद

सन्निकर्षवादिना नैयायिकाना कथनमस्ति यत् अर्थज्ञानविधौ सर्वाधिक साधक सन्निकर्षोऽस्ति। एतद्विदितमस्ति यत् चक्षुषो घटेन सह सयोगे सत्येव घट-ज्ञान जायते। यस्यार्थस्य नेन्द्रियसन्निकर्षो भवति, तस्य ज्ञानमपि न भवति। यदीन्द्रियाद्यसन्निकृष्टानामप्यर्थाना ज्ञान मस्यते, तदा सर्वेभ्य सर्वपदार्थाना ज्ञानेन भवितव्यम्। परन्तु, दृश्यते यत् य पदार्थ दृष्ट्या परोक्षसत्तावान् भवति, न तज्ज्ञान जायते।

अन्यच्चेन्द्रियाणि कारकाणि सन्ति, तानि च दूरे स्थितानि कार्यकराणि न भवन्ति। अत इन्द्रियाणि यै पदार्थै सम्बद्धानि न जायन्ते, तान् ज्ञातु न शक्नु-वन्ति। यतस्तानि कारकाणि सन्ति। यथा तक्षकस्य तक्षणी काष्ठात् दूरे स्थित्वा स्वकार्य न करोति तथैवेन्द्रियाण्यपि पदार्थात् दूरे स्थित्वा पदार्थं ज्ञातु न प्रभवन्ति। एतत्सार्वजनीन सत्यमस्ति यत् स्पर्शेन्द्रिय पदार्थं स्पृष्ट्वैव जानाति। विना स्पर्श न जानाति। इदमेवेन्द्रियाणामन्येषामपि विषयेऽवधेयम्।

सन्निकर्षस्य षड् भेदा सन्ति। यथाहि—

१ सयोग।
२ संयुक्तसमवाय।
३, सयुक्तसमवेतसमुदाय।
४ समवाय
५ समवेतसमवाय।
६ विशेषणविशेष्यभावश्च।

चक्षुष घटादिपदार्थैस्सह सयोग सन्निकर्षोऽस्ति। घटादौ समवायसम्बन्धेन स्थितिमद्गुणकर्मादिपदार्थैस्सह सयुक्तसमवाय सन्निकर्षो विद्यते। यतश्चक्षुषो घटेन सह सयोगसम्बन्धोऽस्ति तथा तस्मिन् घटे समवायसम्बन्धेन गुणकर्मादयो निवसन्ति तथा घटे समवायसम्बन्धेन स्थितिमत्सु गुणकर्मादिषु समवायसम्बन्धेन वर्त्तमानै गुणत्वकर्मत्वादिभि सह सयुक्तसमवेतसमवाय सन्निकर्षोऽस्ति। एवमेव श्रोत्रस्य शब्देन सह समवायसन्निकर्षोऽस्ति। यत कर्णच्छिद्रयो स्थितस्याकाशस्यैव

नाम श्रोत्रमस्ति तथाऽऽकाशस्यगुणसत्वात् शब्दस्तत्र समवायसम्बन्धेन तिष्ठति। शब्दत्वेन सह समवेतसमवाय' सन्निकर्षोऽस्ति। घटेऽस्मिन् घटाभावोऽस्ति। अत्र घटाभावेन सह विशेषणविशेष्यभाव सन्निकर्षोऽस्ति। यतश्चक्षुषा संयुक्तस्य गृहस्य विशेषणं घटाभावो विद्यते।

प्रथमप्रत्यक्षज्ञानं चतुर्थस्य तृतीयस्य द्वितीयस्य वा सन्निकर्षेणोत्पद्यते। वाह्यरूपादीना प्रत्यक्ष चतुर्थस्य सन्निकर्षेण भवति। आत्मा मनसा सबध्नाति, मन इन्द्रियेणेन्द्रियमर्थेन च संबध्नाति। सुखादे प्रत्यक्ष तृतीयस्य सन्निकर्षेण भवति। यतस्तस्मिन् चक्षुरादीन्द्रियाणि कार्यं न कुर्वन्ति। योगिना यदात्मप्रत्यक्ष भवति, तत्केवलमात्मनो मनसश्च सन्निकर्षेणैव भवति। अत सन्निकर्ष एव प्रमाणमुच्यते।

न्यायसिद्धान्तमुक्तावल्यामेतत्स्पष्टीकुर्वता कथितमस्ति यत् द्रव्यस्य यत्र त्वगिन्द्रियेण स्पर्शनप्रत्यक्षमभूत्, तत्र त्वक्सयोग कारणमस्ति, एव द्रव्ये समवेत-स्पर्शप्रत्यक्षे त्वक्सयुक्तसमवेतसमवायसन्निकर्ष कारणमस्ति। द्रव्ये समवेतस्पर्शे समवेतस्पर्शत्वादे· प्रत्यक्षे त्वक्संयुक्तसमवेतसमवायसन्निकर्ष कारणमस्ति। अत्र त्वक्सयोगेऽपि महत्त्वावच्छिन्नत्वोद्भूतस्पर्शावच्छिन्नत्वचाक्षुपप्रत्यक्षवत् स्वीकर्त्तव्यमस्ति। तथैव गन्धप्रत्यक्षे घ्राणसयुक्तसमवायसन्निकर्ष कारणमस्ति। गन्धसमवेतगन्धत्वस्य घ्राणोत्पन्नप्रत्यक्षे घ्राणेन्द्रियसयुक्तसमवेतसमवायसन्निकर्ष कारणमस्ति। एवमेव रसप्रत्यक्षे रसनासयुक्तसमवायसन्निकर्ष कारणमस्ति। रसे समवेत ( रसत्व- ) रासनप्रत्यक्षे रसनासयुक्तसमवायसन्निकर्ष· कारण-मस्ति। शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायसन्निकर्ष कारणमस्ति। शब्दे समवेत ( शब्दत्व- ) स्य श्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायसन्निकर्ष कारणमस्ति। अत्र प्रत्यक्षशब्देनालौकिकप्रत्यक्षमेव ग्राह्यम्, एतच्च प्रमाणस्वरूपमस्ति। अतएव रूप-रस-गन्ध-स्पर्श-शब्दज्ञान सन्निकर्षद्वारैव भवति। अतएव सन्निकर्षस्य प्रमाणा-भ्युपगम आवश्यको विद्यते।

आत्मप्रत्यक्षेऽपि सन्निकर्ष एव प्रमाणभूतोऽस्ति। आत्मनि समवेतस्य सुखादे मानसप्रत्यक्षे मन संयुक्तसमवेतसमवायसन्निकर्ष कारणमस्ति। यत् आत्मनि समवेतसुखादे सुखादौ समवेतसुखत्वादे· मानसप्रत्यक्षे मनस्सयुक्तसमवेतसमवाय-सन्निकर्ष कारणमस्ति।

अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसम्बद्धविशेषणतासन्निकर्ष कारणमस्ति। यथा भूतलादौ घटाद्यभाव अथवा घटाभाववद्भूतलम् इत्यस्मिन् चक्षुरिन्द्रियसम्बद्ध

भूतलमस्ति। तत्र विशेषता घटाभावस्यास्ति। एवमेव घटत्वसमवायवान् घट इत्यस्मिन् चक्षुरिन्द्रियसम्बद्धघटो विद्यते। तत्र विशेषण समवायोऽस्ति। अत विशेषणता समवायस्यास्ति।

वैशेषिका समवायस्य प्रत्यक्ष न मन्वते। यद्यपि विशेषण-विशेष्यभावसन्निकर्षोऽभाव विशेषणतया मतोऽस्ति। यथा 'घटाभाववद्भूतलम्' इत्यस्मिन् भूतलादौ घटाभावस्य प्रत्यक्ष चक्षु सयुक्तविशेषणतासन्निकर्षेण भवति। सख्यादौ रूपादेरभावस्य प्रत्यक्ष सयुक्तसमवेतविशेषणतासन्निकर्षेण भवति। यथा चक्षु सयुक्तभूतलमस्तीत्यत्र समवेतसख्या तत्र विशेषणता रूपादेरभावस्यास्ति। सख्यात्वादौ रूपाभावस्य प्रत्यक्षसयुक्तसमवेत समवेतविशेषणतासन्निकर्षेणास्ति। यथा चक्षु सयुक्तभूतलम्, तस्मिन् समवेतसख्या, तस्या समवेत सख्यात्वम्, तस्मिन् विशेषणता रूपादेरभावस्यास्ति। यतो रूपादेरभाव सख्यात्वे विशेषणमस्ति। शब्दाभावस्य प्रत्यक्ष श्रोत्रावच्छिन्नविशेषणतासन्निकर्षेणास्ति।

मीमासकानामभिमतमस्ति यत्—विशेषणतया तद्वद्भावाना ग्रहो भवेत्। अर्थात् विशेषणता-सन्निकर्षेणाभावाना प्रत्यक्ष भवति। एतन्नैयायिकाना कथनमसगतमस्ति। यतोऽभावस्य प्रत्यक्ष भवत्येव न हि। अतोऽभावप्रत्यक्षानुरोधेन विशेषणविशेष्यभावस्वीकरण व्यर्थमेवास्ति। एतत्प्रश्नोत्तरे नैयायिकाना कथनमस्ति यत् मीमासकान्तिकेऽभावग्राहक किमस्ति प्रमाणम्? यद्यभावप्रतीते कारणमनुपलब्धिनामक कारण मन्येत तदा तदभावप्रतीति न प्रत्यक्ष प्रत्युत परोक्षमेव सपत्स्यते। नैयायिकाना मते तु अभाव प्रत्यक्षमेवास्ति तथा समवाय पदार्थो मत। अत एतयो द्वयो सयोगेन विशेषणतासन्निकर्ष सपत्स्यते। अत्राप्यभावप्रत्यक्षेऽनुपलब्धि सहकारिकारण स्वीकृतमस्ति। तथाऽभावस्य प्रत्यक्ष विशेषणता सन्निकर्षेण जायते। तथ्यमेतदस्ति यत् इन्द्रियविशेषताजन्याभावप्रत्यक्षे योग्यतानुपलब्धि सहकारि कारणमस्ति। तथाहि भूतलाद्यधिकरणे घटादे प्रत्यक्षात्मकज्ञाने सम्पन्ने घटाभावादे प्रत्यक्ष न जायते। एतेनैतत्सिद्ध यदभावोपलम्भप्रत्यक्षे प्रतियोगिन उपलम्भाभाव कारणमस्ति। उपलब्ध्यभावोऽनुपलब्धिप्रत्यक्षाभाव सहकारिकारणमस्ति। एतदाशयोऽस्ति यत् यत्र प्रतियोगिनः प्रत्यक्ष न भविष्यति, तत्रैव यदि प्रतियोग्यभाव प्रत्यक्षेकारणमस्ति तदा जलादिपरमाणौ पृथ्वीत्वोपालम्भप्रत्यक्ष न भवति। यतोऽत्र जलादिपरमाणौ पृथ्वीत्वोपालम्भाभावोऽस्ति। अत पृथ्वीत्वाभावस्य प्रत्यक्ष भवति।

प्रतियोग्युपालम्भाभावे योग्यताप्यपेक्षितास्ति। अर्थात् योग्यताविशिष्ट प्रतियोग्युपालम्भाभाव प्रतियोग्यभावप्रत्यक्षे कारणमस्ति। यस्याभाव क्रियते, स

तस्य प्रतियोगी भवति । अतोऽभावग्रहणे योग्यताविशेष' कारणमस्ति । सेयं योग्यता चोपालम्भाभावे स्थितिमान् तादृशप्रतियोगित्वात्मको धर्मोविद्यते । अत एवाभावग्रहणं प्रत्यक्षद्वारा सभवमस्ति । वायौ रूपाभावस्य पाषाणे सुगन्धाभावस्य, गुडे तिक्तरसाभावस्य, श्रोत्रे शब्दाभावस्य, आत्मनि सुखाभावस्य, च ग्रहणे तत्सम्बन्धिप्रतियोगिना प्रत्यक्ष जायते । यत पूनात्काभावाना प्रत्यक्षस्यापादावीरोपो भवितुंशक्नोति । यत एतेषामभावाना प्रतियोगिरूपादीनामुपलम्भाभावे प्रतियोगिसत्त्व प्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपयोग्यतास्ति । अतो वायौ यदि रुप स्यात् र्तहि चक्षुष उपलम्येत—एवमपादान भवितुमर्हति । ससर्गाभावस्य प्रत्यक्षे प्रतियोगिन प्रत्यक्षयोग्यताऽपेक्षितास्ति तथान्योन्याभावप्रत्यक्षेत्वधिकरणयोग्यताऽऽवश्यकास्ति ।

सन्निक'र्स्य प्रत्यक्षज्ञानापेक्षया भेदद्वयमस्ति । लौकिकमौलौकिकञ्च । लौकिक सन्निकर्प पूर्वोक्तपड्प्रकारो भवति । अलौकिकसन्निकर्पश्च त्रिप्रकारो जायते । यथाहि—

अलौकिकस्तु व्यापारस्त्रिविध परिकीर्त्तित ।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ।[1]

अर्थादलौकिकव्यापाररूपसन्निकर्णस्त्रिविधो भवति । तद्यथा—

१. सामान्यलक्षण ।
२ ज्ञानलक्षण' ।
३ योगजश्च ।

सामान्यलक्षण शब्दस्यार्थोऽस्ति—सामान्यघटत्वादिजाति , घटादिव्यक्तिश्च । इमे द्वेऽपि यस्य स्वरू पे स्त , तस्मात् सामान्यस्वरूपप्रत्यासक्तिरूपार्थस्य लाभो भव ति । स च सामान्यस्वरूपसम्बन्ध इन्द्रियसम्बद्धविशेष्यकेऽय घट इत्याकारकज्ञाने प्रकारीभूतो मन्तव्य । एतदाशयोऽस्ति यत् पूर्ववर्त्तिघटेन सह चक्षुस्सयोगानन्त र घट इति घटत्वे इत्याकारक निर्विकल्पक ज्ञान भवति । तदनन्तरमयघट इत्येतत्प्रकारकसविकल्पकज्ञानं भवति । एतज्ज्ञान घट विशेष्यविधया घटत्वञ्च विशेषणविधया जानाति । अत इन्द्रियसम्बद्घविशेष्ये घटज्ञाने'य घट' इत्याकारकज्ञाने प्रकारीभूतसामान्य घटत्वं वा तद्घटत्वरूपसामान्यलक्षणसन्निकर्णद्वारा 'घटा ' इत्याकारक सकलघटविषयकमलौकिकप्रत्यक्ष भवति । एतदेव मुक्तावल्या

---

१ न्यायसिद्धान्तमुक्तावली, सम्पादक.—न्यायाचार्य प० श्री ज्वालाप्रसाद गौड., प्रकाशक –सरजूदेवी, १८५ गणेशमहाल, वाराणसी, प्रथमसस्करणम्, १९५८ पृ० १५० । श्लोकसख्या—६३

निम्नप्रकारेण प्रदर्शितमस्ति । तथाहि—"इन्द्रियसम्बद्धोऽनुमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं, तत्र ज्ञाने धूमत्वं प्रकारः । तत्र धूमत्वेन रूपेण सन्निकर्षेण धूमा इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते । अत्र यदीन्द्रियसम्बद्धमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्याद्धूमत्वेन सहेन्द्रिय सम्बन्धाभावात् । सं मते इन्द्रियसम्बद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानं तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः । इन्द्रियसम्बन्धश्च लौकिको ग्राह्यः । इदं च बहिरिन्द्रियस्थले बोध्यम् । मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः ।"[२]

सामान्यपदार्थानां भावः सामान्यलक्षणद्वारा प्रचलितोऽस्ति । एतत्सामान्यं क्वचिन्नित्यम् । यथा—भूमित्वादि क्वचिदनित्योऽस्ति, यथा घटत्वादि । यत्रैक एव घटः संयोगसम्बन्धेन समवायसम्बन्धेन च कपाले जाते तदनन्तरं "सर्वाणि भूतलानि संयोगेन घटवन्ति एवं सर्वे कपालाः समवायेन घटवन्तः" एवंप्रकारेण संयोगसम्बन्धेन सकलघटवत् भूतलानाम्—एवं समवायसम्बन्धेन सकलघटवतां कपालानां ज्ञानं जायते । अत एव समानलक्षणप्रत्यासत्तिद्वारा सामान्यलक्षण-सन्निकर्षप्रतीतिर्भवति ।

प्राचीननैयायिकाः ज्ञायमानसामान्यं प्रत्यासत्तिं कथयित्वा सामान्यज्ञान—मलौकिकप्रत्यक्षसन्निकर्षमङ्गीकृतवन्तः । परं नव्यनैयायिकाः कथयन्ति—"ननु संयोगे न घटवत् भूतलम्" इत्याकारकभूतले संयोगसम्बन्धेन घटस्य चाक्षुषप्रत्यक्षमभवत् । तत्पश्चात् कस्मादपि कारणवशाद् स घटो नष्टोऽभवत् । अस्यां परिस्थितौ तद्घटनाशानन्तरमपि पूर्वोक्तचाक्षुषप्रत्यक्षात्मकानुभवजन्य संस्कारबलेन "भूतलं तद्घटवत्" एतत्स्मरणानन्तरं ज्ञानसामान्यलक्षणा-प्रत्यासक्तिद्वारा तद्घटवतां समस्ताधिकरणानां—भूतलानां तद्घटवन्ति भूतलानि-इत्याकारिका प्रतीतिर्जायते । एषा प्रतीतिः ज्ञायमाने सामान्ये प्रत्यासत्तिरूपेण स्वीकृते न भविष्यति । यतः कारणम्—भूतसामान्यं तद्घटो नास्ति, नष्टो जातः । अतः कारणव्यतिरेके—अभावे सति कार्यसद्भावः—एष व्यतिरेकव्यभिचारो भविष्यति । एवं प्रकारेण प्राचीननैयायिकानां मते नव्यनैयायिकाः व्यतिरेकव्यभिचारनामकं प्रथमदोषं प्रतिपादितवन्तः । किञ्च द्वितीयं वृत्तमेतदस्ति यत् इन्द्रियसम्बद्धं विशेष्यकम्—'अयं घटः' एतद्ज्ञान-मद्याभूत् । अन्येषु घटेन सहेन्द्रियसम्बन्धं विनापि 'सर्वे घटाः' इत्याकारिकाऽ-लौकिकी प्रतीतिः समभाव्येत । यतोऽत्र मम चक्षुरिन्द्रियसम्बद्धम्—'अयंघट' एतद्ज्ञानं सम्पन्नम् । तस्मिन् ज्ञाने प्रकारीभूतं सामान्यं घटत्वस्य नित्यत्वात् सर्वदा

२ वही, पृ० २५१-२५२,

सथस्यति। अतः सामान्यरूपे कारणे सत्यपि कार्यमलौकिकप्रत्यक्षं न भवति। अतोऽन्वयव्यभिचारनामको द्वितीयो दोष उत्पत्स्यते। अतः सामान्यज्ञानमेव प्रत्यासक्तिसन्निकर्षो मन्येतेत्युचितम्।

प्राचीननैयायिकानामुक्तशकाया समाधानभूतोत्तरमस्ति यत् सामान्यज्ञाने प्रत्यासक्तिभूते स्वीकृते नव्यनैयायिकाना ऽ मते प्युक्तदोषावापतितौ भविष्यत नवीननैयायिक उक्तशङ्काया समाधान कुर्वन् कथयति यत् प्रथमपक्षे घटे नष्टेऽपि घटज्ञानन्त्वस्त्येव, द्वितीयपक्षे सामान्यघटे नित्येऽपीन्द्रियसम्बन्ध विना तज्ज्ञानं सर्वथाऽसम्भवमस्ति। यत सामान्यविषयक ज्ञान प्रत्यासक्ति नतु सामान्यम्।

ननु सामान्यलक्षणशब्देन सामान्यविषयक ज्ञानार्थ. कथ घटितोऽभवत्? उत्तरम्—लक्षणशब्दस्यैव विषयोऽर्थोऽस्ति। अत सामान्यविषयकज्ञानेन प्रत्यासक्तित्वलाभोऽधिगत'। अतएव "तेन सामान्यविपयक ज्ञान प्रत्यासक्तिरित्यर्थो-लभ्यते।" ननु यत्र चक्षु सयोग विनैव सामान्यघटत्वस्य शाब्दिक स्मरणात्मकं वा ज्ञानं सम्पन्नम्, तत्र सर्वे घटा इत्याकारकसकलघटानामलौकिकचाक्षुषप्रत्यक्षेण भाव्यम्। उत्तरम्—यथा भवान् चक्षुरादिबहिरिन्द्रियेण सामान्यलक्षण द्वाराऽलौकिकचाक्षुसप्रत्यक्ष वाञ्छेत्तदा तदानी यत्किञ्चिद्धर्मिणि तत्सामान्यघटत्वस्य-चक्षुरादीन्द्रियेभ्य उत्पद्यमानस्य सामग्र्यपेक्षितास्ति। ता सामग्री विना तज्ज्ञान न भवितु शक्नोति। सामग्री च चक्षु संयोगादिरस्ति। अत पूर्वोक्तस्थले चक्षु सयोगं विनाऽलौकिकचाक्षुसप्रत्यक्ष न भवितु शक्नोति। आलोकसयोगोऽपि सामग्र्यन्तर्गतो विद्यते। अतोऽन्धकारे घटादे चक्षुषाऽलौकिक चाक्षुसप्रत्यक्ष न भवति। अतएव सामान्यज्ञानलक्षणप्रत्यासक्तिरेव सामान्यलक्षणालौकिक प्रत्यक्ष-कृते सन्निकर्षोऽस्ति।

ननु ज्ञानलक्षणा प्रत्यासक्तिर्यदि ज्ञानरूपा तथा सामान्यलक्षणा प्रत्यासक्तिरपि ज्ञानरूपा चेत्तर्हि सन्निकर्षयोरनयो कतरदन्तर भविष्यति? उत्तरम्-सामान्य-लक्षण सन्निकर्ष स्वाश्रयस्यालौकिकप्रत्यक्षे कारण भवति। अर्थात् सामान्यस्य सकलाश्रयाणा प्रत्यक्ष सामान्यलक्षणा द्वारा भवति। यथा घटत्वज्ञानरूपसामान्य-लक्षणया घटत्वाश्रयसकलघटानामलौकिकप्रत्यक्ष भवति। ज्ञानविषयिमतो ज्ञानलक्षणासन्निकर्षस्य व्यापार सन्निकर्षो भवति, नाश्रयस्य। यथा सुरभिचन्दन-मित्यत्र चन्दन विलोक्य सौरभस्यैव स्मरणात्मकज्ञानरूपज्ञानलक्षणासन्निकर्ष-द्वाराऽलौकिक प्रतीतिर्भवति, नतु सौरभाश्रयचन्दनस्य। यत —"चक्षु सयुक्त-मन' सयुक्तात्मसमवेतस्मृतिविषयत्वम्" एतदेव ज्ञानलक्षणावस्तु विद्यते। चन्दन-दर्शनानन्तरं सुगन्धस्मृतिर्जायते। अत तादृश्यस्मृतिविषयत्वरूपज्ञानलक्षणा

सौरभस्य सन्निकर्षोऽस्ति न चन्दनस्य। यतश्चन्दनस्य तु चाक्षुममेव जायते। नैयायिकानामेपोऽभिप्रायोऽस्ति यत् अस्वीकृतेऽपि सामान्यलक्षणाऽलौकिकसनिकर्षे समस्तसामान्याश्रयाणा प्रतीतिर्न भवितु शक्ष्यति। यत प्रत्यक्षमात्रे सन्निकर्ण कारणमस्ति। मुक्तावल्या कथितमस्ति—'प्रत्यक्षे सन्निकर्ण विना मान न सम्भवति, तथा च सामान्यलक्षण विना धूमत्वेन सकलधूमाना वह्नित्वेन सकलवह्नीनाञ्च मान कथ भवेत् तदर्थ सामान्यलक्षणा स्वीक्रियते।

ननु स्वीकृताया सामान्यलक्षणाया प्रमेयत्वरुपसामान्यलक्षणाद्वारा समस्त-प्रमेयाणा ज्ञाने जाते सर्वज्ञतापत्ति स्यात्। उत्तरम्—प्रमेयत्वरूपसामान्यलक्षणा द्वारा सामान्यत यावत् प्रमेयज्ञाने जातेऽपि घटत्वपदादितद्विशेषधर्मद्वारा घटप-टादिसकलपृथ्वीरुपपदार्थाज्ञातत्वात् सर्वज्ञदोपापत्तेरभावोऽस्ति। एवमेवा-स्वीकृताया ज्ञानलक्षणाया 'सुरभिचन्दनम्' इत्यस्मिन् ज्ञाने सौरभज्ञान कथ भविष्यति ? अतो ज्ञानलक्षणापि मान्या स्यात्। ननु सुरभिचन्दनमित्यत्र सौरभ-त्वरूपसामान्यलक्षणाद्वारा सौरभज्ञान सम्भवमस्ति। पुन ज्ञानलक्षणसन्निकर्षस्य कावश्यकता ? उत्तरम्—उक्तस्थले सामान्यलक्षणाद्वारा सत्यामपि सौरभप्रतीतौ सौरभत्वज्ञान लक्षणाद्वारैव सम्भवमस्ति। अत 'सुरभि चन्दनमित्यत्र' सौरभत्व-भानाय ज्ञानलक्षणाया आवश्यकता स्पष्टैव। एवमेव यत्र धूमत्वरूपेण धूमपटलस्य ज्ञानमभूत्, अर्थात् धूमत्वेन धूलिपटलमहजानामि' एपोऽनुव्यवसायोऽजनि। अस्मिन्ननुव्यवसाये धूलिपटलस्य भान ज्ञानलक्षणयैव भविष्यति। अत ज्ञानलक्षणा-प्रत्यासक्ति सामान्यलक्षणाप्रत्यासक्त्या सर्वथा भिन्नास्ति।

योगजा प्रत्यासक्ति उक्तोभयोरपि सन्निकर्षयोर्भिन्ना विद्यते। यत —योगा-भ्यासजनितधर्मविशेपोभयसहकृतमनसा भुञ्जानस्य सूक्ष्मपदार्थविषयक मानस भवति। योगजसन्निकर्षस्य द्वौ भेदौ मतौ स्त —

योगजो द्विविध प्रोक्तो युक्तभुञ्जानभेदत,
युक्तस्य सर्वदा भान चिन्तासहकृतोऽपर।[1]

अर्थात् योगजोऽलौकिकसन्निकर्ष द्विविधो वर्तते—

१ युक्तयोगजोऽलौकिकसन्निकर्ष।

२, युञ्जानयोगजोऽलौकिकसन्निकर्ष।

योगजसन्निकर्षो मूलत योगाभ्यासेनोत्पद्यते। एष धर्मविशेपरूपोऽस्ति। योगी द्विविधो भवति। युक्तयोगी योगजधर्मसहायतयाकाशपरमाण्वादिसमस्त-

---

१ सिद्धान्तमुक्तावली, कारिका ६५

पदार्थाना ज्ञानं सदा लभते। पर युञ्जानयोगी त्वाकाशपरमाण्वादिसमस्त पदार्थान् ध्यानविशेषे सत्येव ज्ञातुं प्रभवति। एप ध्यानदिशेष चिन्ताविशेषोऽपि कथितोऽस्ति।

एवं प्रकारेण नैयायिकै सन्निकर्षप्रमाणस्य सविस्तरो विचारो विहित।

जैननैयायिकैर्बौद्धनैयायिकैश्च सन्निकर्ष प्रमाणरूपेण न स्वीकृत। जैनानामभिमतमस्ति यत् वस्तुज्ञानविधौ सन्निकर्ष. साधकतमो नास्ति। अत एव नास्ति स प्रमाणभूत। अन्वयव्यतिरेकसमधिगम्यकार्यकारणभाव एव साधकतमोऽङ्गीकृत। अर्थात् यस्मिन् सति ज्ञानस्यात्, असति च तन्न स्यात्, स साधकतम कथित। किन्तु सन्निकर्षे नैतदस्ति। क्वचित् सत्यपि सन्निकर्षे ज्ञान न भवति। यथा घटवत् आकाशादिभिस्सहापि चक्षुस्संयोगो भवति, तथापि नाकाशज्ञानंजायते। अतो यो यत्राव्यवहित: कार्यं करोति, स एव तत्र साधकतमो मन्यते। यथा गृहस्थान् पदार्थान् प्रकाशयितुं दोपक। एक ज्ञानमेवास्तीदृशं यद्विना किमपि व्यवधानं स्वविषयप्रतीतिं कारयति। अतस्तदेव प्रतीतौ साधकतममस्ति। अतस्तदेव प्रमाणमस्ति। सन्निकर्षवादिनो नैयायिका एतत्समाधान कुर्वन्त. कथितवन्त यत् चक्षु सन्निकर्षे घटादिकज्ञानकारिका योग्यता विद्यते। आकाशादिज्ञानकारिका॰योग्यता वर्तते। अत. स आकाशादिज्ञानं न कारयति। एषा योग्यता विशिष्टशक्तेर्नामास्ति। उद्योतकरेण सहकारिणा निकटता शक्ति कथिता। इदानी प्रश्न एष उत्थितो भवति यत् सन्निकर्पस्य सहकारिकारणं द्रव्याणि, 'गुणा अथवा कर्माणि सन्ति। आत्मद्रव्यन्तु सहकारिकारणं भवितुं शक्यत्येव न यत' आकाशचक्षुस्सन्निकर्षसमये आत्मा विद्यमानो भवति, तथापि ज्ञानं न जायते एवमेव॰'दिगादयोऽपि सन्निकर्षस्य सहकारिकारणानि भवितु न शक्नुवन्ति। यत आकाशचक्षुस्सन्निकर्पसमये तेऽपि विद्यमाना भवन्ति। तथापि नाकाशज्ञान,जायते। [मनोऽपि सन्निकर्षसहायक न भवितुमर्हति। यतश्चक्षुराकाशसन्निकर्षसमये सत्यपि पुरुषमनसि नाकाशज्ञान जायते। अत एतत्कथन न ज्यायो यत् आत्मम इन्द्रियाणा चतुर्णां सन्निकर्षो ज्ञानविधौ साधकतमो विद्यते।,'यत एषा [सम्पूर्णा सामग्री आकाशेन सह सन्निकर्षकाले विद्यमाना भवति।·यद्येवं कथ्येत यत् तेजोद्रव्य प्रकाशसन्निकर्षस्य सहायकमस्ति, यतस्तेषु सत्स्वेवाक्षिभ्या।ज्ञानं जायते, इति-तदपि न साधु। यतो गृहवत् आकाशेन सह सन्निकर्षकाले सत्यपि प्रकाशे नाकाशज्ञानं भवति।[यद्यदृष्टगुण सहायको मन्येत तदापि कदाचन॰आकाशस्य चक्षुषा सह ज्ञानप्रसङ्ग उपस्थितो भविष्यति। यत: सहकारी अदृष्टाकाशस्य सन्निकर्षस्य च समये वर्त्तमानो भवति। एवमेव कर्मण्यपि

सन्निकर्षस्य सहकारिणि स्वीकृते स एव दोष आपतति । यत आकाशेन्द्रियसन्नि-कर्षकालेऽपि चक्षुष उन्मीलन-निमीलनकर्मणी चलत एव । अत सहकारिकारणाना सहायतारूपा शक्तिरर्थज्ञानविधौ साधिका नास्ति । किन्तु ज्ञातु अर्थग्रहणस्य शक्ति योग्यता वा वस्तुज्ञानविधौ साधकतमा विद्यते ।

वस्तुतो नैयायिकमते सन्निकर्ष स्वय प्रमाण नास्ति । स यद्ज्ञानमुत्पादयति, तद्ज्ञानमेव प्रमाणमस्ति । ज्ञानोत्पति इन्द्रियपदार्थयो संयोगे सत्येव भवति तथैष सयोग कतिधा भवति । अत इन्द्रियार्थसन्निकर्प प्रति ये तर्का प्रदीयन्ते, तेष्वधिकाशा निरर्थका एव सन्ति ।

## अनुमानप्रमाणस्य मूलाधार व्याप्तिज्ञानम्

अनुमानस्य मूलाधारो व्याप्तिरस्ति । एष विशेषसम्बन्धो व्याप्ति कथ्यते । या न विच्छिद्यते । न च व्यभिचरिता भवति । प्रमाणशास्त्रे विशेषसम्बन्ध एष तयोर्द्वयो पदार्थयो साहचर्य कथ्यते, ययो गम्यगमकभाव साध्यसाधनभावो वा विवक्षित । अथवा लिङ्गलिङ्गिनो साधनसाध्ययो गम्यगमकभावस्य साध्यसाधनभावस्य वा प्रयोजकसम्बन्धी विशेषसम्बन्ध कथ्यते । यथा मेघवृष्टचो सम्बन्ध तर्कसग्रहे तर्कभाषायाञ्च व्याप्तिलक्षण ब्रुवता लिखितम्—

यत्र यत्र धूमस्तत्र तत्राग्निरिति साहचर्यनियमोव्याप्ति ।[1]

अर्थात् साहचर्यविषयस्य नाम व्याप्तिरस्ति । सामान्यतया साहचर्यं द्विविध भवति—

१ अनियतम्
२ नियतञ्च

अनियतस्यार्थोऽस्ति व्यभिचरितम् । नियतस्य चार्थोऽस्ति—अव्यभिचरितम् । वह्निधूमयो सम्बन्धोऽनियतसम्बन्धोऽस्ति । यत कदाचित् सत्यपि वह्नौ धूमो नोत्पद्यते । यथाङ्गार. कोकिलाग्निर्वा । एतत्सम्बन्धे एकस्योपस्थितिरन्य विनापि सम्भवास्ति । अत एवैतादृश साहचर्यसम्बन्धोऽनियतो व्यभिचरितो वा मन्यते । न्यायेऽनियमस्य व्यभिचारस्यैवार्थो भवति एकस्याभावेऽन्यस्य सद्भाव । पर ययोर्द्वयो साहचर्यं नियत भवति तयोर्विशेषसम्बन्धोऽर्थात् व्याप्तिर्मन्यते यथा धूमाग्निसम्बन्ध । यत्र धूमो भवति तत्र वह्निरवश्य भवति । यथा पाकशाला । तथा यत्र वह्निर्न भवति तत्र धूमोऽपि न भवति । यथा जलाशय । एव प्रकारेण धूमस्य

१ अन्नभट्ट, तर्क सग्रह , पृष्ठ ५४ केशवमिश्र , तर्क भाषा, पृ० ७२

वह्निना सह व्याप्तिरस्ति । यत सति वह्नौ धूमो भवति, असति स न जायते । अतो धूमवह्न्योः साहचर्यसम्बन्धो नियतोऽव्यभिचरितोऽस्ति ।

एष आशयोऽस्ति यत् ययो साधनसाध्ययोः साहचर्यसम्बन्धेऽनियमो व्यभिचारो वा न लभ्यते, स नियतस्तथाऽव्यभिचरितसम्बन्धः कथ्यते तथैतादृशसम्बन्धस्यैव नाम व्याप्तिरस्ति । न्यायसिद्धान्तमञ्जर्यामेतत्सम्बन्ध स्पष्टीकुर्वता कथितम्—

"यथा इदं वाच्यं ज्ञेयत्वात् पृथिवी इतरेभ्यो भिद्यते गन्धवत्वात् पर्वतो वह्निमान् धूमात् इत्यादिषु केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिषु त्रिष्वपि हेतुषु तादृशा सम्बन्धा सन्तीति व्याप्तिसामान्यस्वरूपाणि संगच्छन्ते । भवति च धूमत्वविशिष्टसमानाधिकरणा यावन्तो धर्मा वह्निसमानाधिकरणा इति धूमे वह्निव्याप्ति न तु वह्नौ धूमस्य । नहि वह्नित्वविशिष्टसमानाधिकरणा यावन्तो धूमसमानाधिकरणा भवन्ति । अय पिण्डत्वस्य वह्नित्वविशिष्टसमानाधिकरणस्य धूमासमानाधिकरणत्वात् । अस्ति चेदं केवलान्वयिनि । अभिधेयत्वविशिष्ट समानाधिकरणाना यावता ज्ञेयत्वसमानाधिकरणत्वात् ।[२]

बौद्ध नैयायिको धर्मकीर्त्ति तथा तद्व्याख्याकारोऽरचट व्याप्तिस्वरूप निर्दिशन् लिखितवान् यत् सति व्यापके एव व्याप्यसद्भावोऽथवाव्याप्ये सत्येव व्यापक सद्भाव एव हेतोर्व्याप्तिरस्ति । अत्र व्यापकव्याप्ययोरुभयोर्धर्म व्याप्ति. कथिता । यदैवं कथ्यते यत् व्यापके सति व्याप्यसद्भाव व्याप्तिरस्ति तदा व्याप्यधर्म व्याप्तिरूपेण विवक्षितोऽस्ति । तथा यदैतत्प्रतिपाद्यते यत् व्याप्ये सति व्यापकसद्भावो व्याप्तिरस्ति तदा व्यापकधर्मव्याप्तिरभिप्रेतास्ति । धर्मकीर्त्तेर्वचनमस्ति—

तस्य व्याप्तिर्हि व्यापकस्य तत्र भाव एव व्याप्यस्य वा तत्रैव भाव ।[१]

उदयनस्याभिमतमस्ति यत् साध्येन सह साधनस्य स्वाभाविकसम्बन्धो भवति । तथैष सम्बन्ध साहचर्यरूपत्वात् व्याप्तिपरकोऽस्ति । वाचस्पतिरुक्तवान् यत् कोऽपि सम्बन्ध स्यात् परं य. स्वाभाविकस्तथा नियतोऽस्ति स गमक तथेतर सम्बन्धो गम्यो भवति । स्वाभाविकस्यार्थोऽस्ति कस्यापि उपाधेरभाव । यथा धूमस्य वह्निना सह स्वाभाविकसम्बन्धोऽस्ति । यतस्तस्मिन् कोऽप्युपाधिर्नास्ति । पर वह्नेर्धूमेन सह स्वाभाविकसम्बन्धो नास्ति, यतो वह्नि. धूमं विनाप्युपलभ्यते । वाचस्पति न्यायवार्त्तिकतात्पर्यवृत्तौ लिखितवान्—

---

२. न्यायसिद्धात मञ्जरी, पृ० १६

१ हेतुविन्दु , पृष्ठ ५३

तस्माद्यो वा स वाऽस्तुसम्बन्ध केवल यस्यासौ स्वाभाविको नियत स एव गमको गम्यश्चेतर सम्बन्धीति युज्यते ।[२]

तस्मादुपाधि प्रयत्नेनान्विष्यन्तोऽनुपलभमाना नास्तीत्यवगम्य स्वाभाविकत्व सम्बन्धस्य निश्चिनुम ।[3]

वाचस्पतेरुदयनस्य चानेन वचनेनावगम्यते यत् साध्यसाधनरूपेण गम्यगमक-रूपेण वाऽभिमतयो वस्तुनो नियतसम्बन्धस्यकारणमनौपाधिकताऽस्ति तथाऽनियत-सम्बन्धस्य कारणमौपाधिकताऽस्ति । अनुपाधौ साधन साध्यस्य नियमेनानुमापक भवति तथा सत्युपाधौ साधनस्थाने साधनाभासो जायते तथा तत्साध्यस्य गमक न भवति । भाषा परिच्छेदे व्याप्ते सुदीर्घा परिभाषा दत्ता विद्यते । एतस्या. परि-भाषाया स्फोटने कृतेऽपि एतदेव ज्ञायते यत् अन्वयव्यतिरेकसम्बन्धस्य नाम व्याप्ति-रस्ति । अत्र विषयस्पष्टीकरणदृष्ट्योक्तव्याप्तिस्वरूप प्रस्तूयते—

अन्वयव्यतिरेकव्याप्तिसाधारण व्याप्तित्व तु हेतुतावच्छेदकनिष्ठप्रकारता-भिन्ना यानुमितिजनकतावच्छेदकतावच्छेदकीभूता प्रकारता तद्वत्त्वम् इति । तथा हि केवलान्वयिस्थले इद वाच्य ज्ञेयत्वादित्यादौ उक्तलक्षणघटकतादृशप्रकारता च हेतुव्यापकसाध्यसामानाधिकरण्यनिष्ठानिरूप्यनिरूपकभावापन्ना प्रकारता भवति । अन्वयव्यतिरेकिस्थले वह्निमान् धूमादित्यादौ तादृशी प्रकारता तु हेतु व्यापकसामानाधिकरण्यनिष्ठप्रकारता साध्याभावव्यापकीभूताभावप्रतियोगित्व निष्ठप्रकारता च भवति । केवलव्यतिरेकिस्थले पृथिवी इतरेभ्यो भिद्यते गन्धवत्वादित्यादौ जीवच्छरीर सात्मक प्राणादिमत्त्वादित्यादौ चाप्रसिद्धसाध्यक-स्थलेऽपि तादृशी प्रकारता च हेतुव्यापकसाध्यसामानाधिकरण्यनिष्ठप्रकारता भवति इति सर्वत्र व्याप्तौ लक्षणसमन्वयो वोध्य अत्र हृद्यम् । साध्याप्रसिद्धावपि अनुमिते पूर्व पक्षातिरिक्ते यत्किञ्चिदधिकरणे साध्यनिश्चयाभावेऽपि सात्मकत्वादिरूपसाध्यस्य ख-पुष्पशशशृङ्गादिवत्तुच्छत्वाभावेन हेतुव्यापकसाध्य-सामानाधिकरण्य ग्रहोत्पत्तौ वाधकाभाव इति । सा व्याप्तिर्द्विविधा, अन्वयव्याप्ति व्यतिरेकव्याप्तिश्च । तत्रान्वयव्याप्तिरपि द्विविधा पूर्वपक्षव्याप्ति. सिद्धान्तसिद्ध-व्याप्तिश्चेति । उभयविधान्वयव्याप्तिज्ञाने व्यभिचारज्ञानाभाव सहचारज्ञान च कारणम् । व्यतिरेकव्याप्तिज्ञान तु साध्याभावे हेत्वभावस्य साहचर्यज्ञान व्यभि-चारज्ञानाभावश्च कारणम्—इति विवेक [१] ।"

---

२ न्यायवार्तिकतात्पर्यटीका १।१।५, पृ० ११६

३ सैव, पृ० १६५

१ भाषापरिच्छेद, श्लोक १३८

व्याप्तेर्विचारो नव्यनैयायिकैः विशेषरूपेण कृतो विद्यते। सिद्धान्त मुक्तावल्यां व्याप्ते परिभाषे द्वे उपलभ्येते। प्रथमपरिभाषया साध्यवत्ताऽन्यस्मिन् हेतोरवृत्तित्व व्याप्ति कथ्यते। द्वितीयपरिभाषया च हेतुमत्या निष्ठावृत्तेरभाव, अप्रतियोगिना साध्येन हेतो सामानाधिकरण्य व्याप्तिरस्ति। यथा "पर्वतो वह्निमान् धूमादित्यत्र" हेतो धूमस्याधिकरण पर्वतो विद्यते। तत्र हेतुवृत्तेरभावो नास्ति तथा घटाभावपटाभावादय सर्वे प्रतियोगिनो मिलन्ति। अतो वह्नि साध्येन सह हेतु धूमस्य समानाधिकरणी विद्यते। कथितम्—

'व्याप्ति साध्यवदन्यस्मिन् असम्बन्ध उदाहृत।'

इति ज्ञानादप्यनुमिति स्यात्। इत्थ च यत्र ज्ञानद्वय तत्रापि विशिष्टज्ञानं कल्पनीयम्, फलमुखगौरवस्यादोषत्वात्।

व्याप्योनाम व्याप्त्याश्रयस्तत्र व्याप्ति केत्यत आह। व्याप्तिरिति। वह्निमान् धूमादित्यादौ साध्यो वह्नि, साध्यवान् महानसादि, तदन्यो जलह्रदादि, तद् वृत्तित्वं धूमस्य इतिलक्षणसमन्वय। धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिन् तप्ताय पिण्डादौ वह्नेः सत्त्वान्नातिव्याप्ति। अत्र येन सम्वन्धेन साध्यं तेन सम्बन्धेन साध्यवान् बोध्यः। अन्यथा समवायेन वह्निमान् बह्नेरवयव तदन्यो महानसादि, तत्र धूमस्य वर्तमानत्वादव्याप्तिप्रसङ्गात्। साध्यवदन्यश्च साध्यवत्त्वावच्छिन्न प्रतियोगिताकभेदवान् बोध्य[२]।

अथवा हेतुमन्निष्ठविरहाप्रतियोगिना,
साध्येन हेतोरैकाधिकरण्य व्याप्तिरुच्यते।

निष्ठावृत्तिर्यस्य स तथा विरहोऽभाव। तथा च हेत्वधिकरणावृत्तिर्योऽभावस्तदप्रतियोगिना साध्येन सह हेतो सामानाधिकरण्य व्याप्तिरुच्यते। अत्र यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्व तत्तद्बह्न्यादेरस्तीत्यव्याप्ति। न च समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति वाच्यम्। तत्तद्बह्न्यादेरप्युभयाभावसत्वादेकसत्वेऽपि द्वय नास्तीतिप्रतीते, गुणवान् द्रव्यत्वादित्यादावव्याप्तिश्च। तथापि प्रतियोगितानवच्छेदक यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्य व्याप्तिरिति वाच्यम्।[१]

---

२ न्यायसिद्धान्तमुक्तावली, लेखकोन्यायाचार्यः पण्डितश्रीज्वालाप्रसाद गौड., प्रकाशिका—सरयूदेवी, १८५ गणेशमहाल वाराणसी, प्रथमसस्करणम्, १९६० पृ० १४–१५

१. तदेव, पृ० २१–२२

## उपाधेरुपाधिनिरूपणस्य च प्रयोजनम्

नियतसम्बन्धो व्याप्तिः कथ्यते। व्याप्तेरस्मिन् स्वरूपे उपाधिः घटितोऽस्ति। अतः उपाधेर्लक्षणमावश्यकम्। उपाधेर्व्युत्पत्तिगतोऽर्थः एवमस्ति। तथाहि— उप-समीपवर्त्तिनि आदधाति स्वकीयं रूपमित्युपाधिः, अर्थात्, यः समीपवर्तिनि स्वरूपमारोपयेत् स उपाधिरस्ति। उदाहरणार्थम्—जपाकुसुमो वर्तते। यदि जपापुष्पं स्वच्छस्फटिकमणिसमीपे रक्षितं स्यात् तदा तदरुणिमा तस्मिन्नारोप्यते। यतोऽसौ तस्मिन् जपापुष्परूपोपाधिसमर्गेणायातोऽस्ति। अतः स औपाधिको वर्तते। स्वाभाविको नास्ति। एवमेव वह्निहेतुना धूमानुमानविधौ धूमसामग्री, आर्द्रेन्धनसयोग उपाधिरस्ति। यतस्तत्संसर्गेण वह्नौ धूमव्याप्तेरारोपो जायते। अतो वह्निहेतुरार्द्रेन्धनसंयोगरूपोपाधिरूपत्वात् साध्यस्य गमको नास्ति। तर्कसंग्रहे उपाधेर्लक्षणं भवता लिखितमस्ति यत् साध्येन सह सत्यपि व्यापकसम्बन्धे साधनेन सहाव्यापकसम्बन्धस्य स्थितिरुपाधिरस्ति। उदाहरणं पर्वतो वह्निमान् धूमत्वादिति दत्तमस्ति। अत्र चार्द्रेन्धनसंयोग उपाधिः कथितोऽस्ति—

साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः। साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साधनाव्यापकत्वम्। (यथा) पर्वतो धूमवान् वह्नेरित्यत्रार्द्रेन्धनसंयोग इति नास्ति। अयोगोलके आर्द्रेन्धनसंयोगाभावात्। एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः।[२]

एतल्लक्षणानुसारमार्द्रेन्धनसंयोगः साध्यव्यापकत्वेन साधनाव्यापकत्वेन चोपाधिरस्ति। उपाधिसहितत्वाच्च वह्निर्हेतुः धूमसाध्यस्य साधको नास्ति। एवमेव स "श्यामो मैत्रतनयत्वात् इतरतनयवत्" इत्यसदनुमानेऽपि अन्नपानादिपरिणतिविशेषस्य शाकपाकजन्यत्वोपाधेर्विद्यमानतया च मैत्रतनयत्वहेतुः स्वश्यामतासाध्यस्यानुमापको नास्ति। उपाधेर्विचारः सर्वैर्नैयायिकैर्विहितः परं गङ्गेश उपाध्यायः पूर्वपक्षे व्याप्तिलक्षणानि प्रस्तूय तेषां समीक्षां कृतवान्। पश्चात् सिद्धान्तपक्षरूपेण स्वपरिष्कृतं व्याप्तिलक्षणं समुपस्थापितवान्। तथा तस्मिन् सम्भाव्य दोषानपाकृत्य तन्निर्दुष्टं प्रमाणितवान्।

उपाधेः प्रयोजनं हेतोः साध्येन सह व्यभिचारित्वाव्यभिचारित्वप्रदर्शनमस्ति। यत् साध्यस्य व्यापकस्य व्यभिचारि भवति। तत् साध्यव्याप्यस्य व्यभिचारि अवश्यं भवति। यथापर्वतो धूमवान् वह्निमत्वादित्यत्रार्द्रेन्धनसंयोग उपाधिरस्ति।

---

२. तर्कसंग्रह, न्यायबोधिनी वाक्यवृत्तिनिरुक्ति टिप्पणीसहिता च, चौखम्बा संस्कृत सिरीज, आफिस, वाराणसी—१, सन् १९०१ पृ० ६०

आर्द्रेन्धनसयोगो धूमसाध्यस्य व्यापकोऽस्ति तथा वह्निहेत्वार्द्रेन्धनसयोगस्य व्यभिचारी वर्त्तते। स तस्याभावेऽयोगोलकादावपि तिष्ठति। अतो वह्निमान् हेतुर्धूमसाध्यस्य व्यापकस्य व्यभिचारित्वात् धूमसाध्यस्य व्याप्यस्यापि व्यभिचारी वर्त्तते। आशय एषोऽस्ति यत् उपाधे सद्भावेन हेतौ व्यभिचारस्योपाधेश्चाभावेन तस्मिन् अव्यभिचारस्यानुमान भवति। अतो यदि कस्मिश्चिद्धेतौ उपाधिरुपलब्धाजायते, तदा तेन तस्मिन् व्यभिचारनिश्चयो भवति। तथा व्यभिचारनिश्चयेन तज्जन्यमनुमानं दूषितमनुमानं ज्ञायते। तथा यदि नोपाधिर्लभ्यते तदा तद्भावेन हेतावव्यभिचारस्य निर्णयो भवति। तथाऽव्यभिचारनिर्णयेन तदुत्पन्नमनुमान निर्दोषमन्यते। न्यायवार्तिकतात्पर्यटीकाया निराकरणमुपाधेः कुर्वता लिखितम्—

प्रत्यक्षोपलम्भास्तावद्योग्यानुपलब्धेरेव निरस्ता प्रमाणान्तरपरिदृष्टानामपि व्यापकानामुपाधित्वे वह्ने' सार्वत्रिकत्वप्रसग। अव्यापकानामपि नित्यानामुपाधित्वे अतएवोपाधिमपश्यन्तो मुहूर्त्तमनुमितौविलम्बामहे[1]

वस्तुत उपाधेरनुपलम्भेन तस्याभावस्य निश्चय क्रियते। यथा धूमस्य स्वाभाविकसम्बन्धे उपाधेरनुपलम्भे तस्याभावनिश्चयो भवति। वर्द्धमानोपाध्यायैं न्यायवार्तिकतात्पर्यपरिशुद्धौ एका शङ्कोत्थापिता यत् प्रत्यक्षगम्योपाधीना विनिश्चये जातेऽतीन्द्रियस्य शकिताभावस्य च निश्चय कथ भविष्यति ? उदयन एतत्समाधानं प्रस्तुवन् कथितवान् यत् विपक्षबाधकतर्कैणोक्तप्रकारोपाधीनामपि निश्चयो भवति। सन्दर्भेऽस्मिन् केशवमिश्रस्य समाधानमपि उल्लेखनीयमस्ति। तस्य मतमस्ति यत् अतीन्द्रियोपाधीनामाशका न भवितु शक्नोति। यतस्तेषु सत्स्वतीन्द्रियेषु ते उपाधय आविष्कर्तृभ्यो ज्ञेया न भवन्ति। तथाऽज्ञातस्थितौ तेषा सद्भावशंका निर्मूलास्ति। तात्पर्यमस्ति यत् प्रमाणसिद्धेरुपाधेराशका क्रियते। अन्यथा भोजनादौ विषादे सद्भावशङ्काया सत्या तेषु लौकिकाना प्रवृत्तिर्न भविष्यति। निष्कर्ष एषोऽस्ति यत् प्रमाणोपपन्नोपाधेः निश्चयेन व्यभिचारनिश्चय व्यभिचार-निश्चयेन विवक्षितसाध्यसाधनयो व्याप्ताभावनिर्णयो भवति। तथोपाध्यभावनिश्चयेन व्यभिचाराभावनिश्चयस्य तथा व्यभिचाराभावनिश्चयेन व्याप्तिनिश्चयो भवति।

### व्याप्तिग्रहणम्

व्याप्तिग्रहणस्योहापोह चार्वाकातिरिक्तै शेषे. सर्वै विचारकै. कृतः। न्याय दर्शने व्याप्तिग्रहणोपरि विचार कुर्वन् गौतम. अनुमानकारण प्रत्यक्ष निर्दिष्टवान्।

१—न्यायवार्तिक तात्पर्यपरिशुद्धि, १।१।५ पृ० ६९२—९५

जाते मणेरुदाहरण दत्तम् । यथोत्तमजातीयो मणिः स्वविभिन्नबिशेषतया विविध व्यवहाराणा प्रयोजक तथा धारेयताया विभिन्नफलविशेषाणासम्पादकोऽन्वितो भवति । तत्तत्सूक्ष्मविशेषताना निर्णयमणिपरीक्षका कुर्वन्ति, तथैव भूयोदर्शनस्य सूक्ष्मविशेषता अपि परेक्षकानुमातृद्वारा ज्ञायन्ते । भूयोदर्शनेन व्याप्तिग्रहणं सहज सम्भवमस्ति । बुद्धेः कोमलमध्यतीव्रादयोभेदा सन्ति अतोभूयोदर्शनस्य मात्रापि न्यूनाऽन्यूना वा भवितु शक्नोति ।

वद्र्धमानोपाध्यायेन भूयोदर्शनस्य मीमासा कुर्वता स्वपितृगङ्गेशोपाध्याय मतानुसारज्ञानविरहसहकृतसहचारदर्शनानि व्याप्तिग्राहकाणि प्रतिपादितानि । सत्तर्केण च व्याप्तिप्रमया तर्काभासेन च व्याप्त्यप्रमाया वर्णनमकारि । तेन तर्क विशेषरूपेण समर्थयतैव कथितं यत् ये तर्कं विना केवलसहचारदर्शनेनैव व्याप्ति ग्रह मन्वते, तेषामनुमानेषु पक्षेतरत्वोपाधिर्भवति । यत्र व्याभिचार-ज्ञानविरह सहकृतसहचारदर्शनानि न सन्ति, तत्र शब्देनानुमानेनच व्याप्तिग्रहभावस्योल्लेख कृतोविद्यते ।

गगेशस्तत्त्वचिन्तामणौ मीमासकद्वारान्वितभूयोदर्शनादिव्याप्तिग्रहोपायाना समीक्षा कुर्वन् भूयोदर्शन सशायकं तर्कञ्चानवस्थाग्रस्त निरूपितवान् तथोतरपक्ष रूपेण व्यभिचारज्ञानविरहसहकृतसहचारदर्शनं व्याप्तिग्राहक कथितवान् । तन्मतमस्ति यत् व्यभिचारनिश्चयस्य व्यभिचारशङ्कायाश्चाभाव क्वचिद् विपक्ष तर्केण क्वचित् स्वयमेव सिद्ध्यति । यावत् व्यभिचाराशका तिष्ठति. तावत्तर्कोऽपे क्षितो भवति । अतस्तर्के व्याप्तिग्राहके स्वीकृते नानवस्थाप्रसङ्गो जायते । यत्र विरोधिप्रमाणप्रदर्शनेन शंकैव नावतरति, तत्र तर्कंविनैव व्याप्तिग्रहो जायते । गगेशेन लिखितम्—

"व्यभिचारविरहसहकृत सहचारदर्शन व्याप्तिग्राहकम् । ज्ञान निश्चय शका च । सा च क्वचिदुपाधिसन्देहात् क्वचिद्विशेषादर्शनसहितसाधारणधर्मदर्शनात् तद्विरहश्च क्वचिद्विपक्षबाधकतर्कात्, क्वचित्स्वत सिद्धएव । तर्कस्य व्याप्ति-ग्रहमूलकत्वेनानवस्थेति चेत् न । यावदाशंक तर्कानुसरणात् । यत्र च व्याघातेन शकैव नावतरति, तत्र तर्कं विनैव व्याप्तिग्रह:"[1]

न्यायदर्शने व्याप्तिग्रहणाय निम्नलिखितसाधनानि वर्णितानि—

१ भूयः सहचारदर्शनम् ।
२ व्यभिचारज्ञानविरहः ।

---

१ तत्त्वचिन्तामणि जागदीशी, व्याप्तिग्रहोपाय, पृ० ३७८

३ तर्क ।
४ अनुपलम्भव्यतिरेक ।
५ भूयोदर्शनजनितसस्कार ।
६ सामान्यलक्षणा ।
७ शब्दानुमानौ ।

वैशेषिकव्याप्तिग्रह

प्रशस्तपादोऽन्वयव्यतिरेकद्वारा व्याप्तिग्रह कथितवान् । स कुमारिलवत् व्याप्ति केवल सपक्षगता न मन्यते । अपि च समस्तदेशकालानुयायिनी ब्रवीति । उदाहरणार्थं यत्र धूमो भवति तत्राग्निर्भवति । यत्र नाग्निर्भवति, न तत्र धूमो जायते । अनेनान्वयव्यतिरेकप्रदर्शकोदाहरणेन प्रशस्तपाद व्याप्ति सर्वोपसहार वतीमकथयत् । अन्वयार्थो दर्शन व्यतिरेकार्थश्चादर्शन विद्येते । आभ्या दर्शनादर्शनाभ्या व्याप्तिर्निश्चीयते । वैशेषिकमतेन भूयोदर्शनसहकृतान्वयव्यतिरेका व्याप्तिग्रहोपाया सूचिता ।

मीमासकद्वारा साख्यद्वारा च व्याप्तिग्रहणम्—

प्रभाकरमतानुयायिना शालिकानाथेनाव्यभिचारिण व्याप्ति कथयित्वा तद्ग्रहणमसकृद्दर्शनद्वारा कथितम् । तन्मतमस्ति यत् येन प्रमाणेन साधन सम्बन्ध विशिष्ट गृह्यते, तेनैव प्रमाणेन तत्साधनस्य व्याप्तिसम्बन्धोऽपि गृहीतो जायते । तद्ग्रहणाय प्रमाणान्तरापेक्षा न भवति । उदाहरणार्थमयमग्निर्धूमसम्बद्धो विद्यते । एव विधप्रत्यक्षासकृत्दर्शनेन ज्ञाने जाते तत्सम्बन्धिताधूमनिष्ठ-व्याप्ति सम्बन्धस्यापि ज्ञान तेनैव भवति । अतोऽसकृद्दर्शनव्याप्तिर्ग्राहिकास्ति । कुमारिलोलिखितवान्—

सम्बन्धो व्याप्तिरिष्टात्र लिंगधर्मस्य लिंगिना,
व्याप्यस्य गमकत्वञ्च व्यापक गम्यमिष्यते ।
भूयो दर्शनगम्या च व्याप्ति सामान्यधर्मयो,
ज्ञायते वेदहानेन क्वचिच्चापि विशेषयो ॥

भाष्यकारश्शबरोऽनुमानलक्षणगतसम्बन्ध व्याप्तिरूपेण स्वीकुर्वन् त भूयोदर्शनगम्य प्रतिपादितवान् । तस्य कथनमस्ति यत् समव्याप्तौ व्याप्तौ वोभयो वाप्यमेव गमक भवति । यतो व्याप्यज्ञानेन व्यापकस्य ज्ञानमवश्य भवति । पर व्यापकज्ञानेन व्याप्यस्य ज्ञान न भवति । अतो व्याप्ये व्यापता तथा व्यापके

---

१ मीमासा श्लोक, वा० १।१५ अनुमानपरिच्छेद, पृ० ३४८

व्यापितास्ति। यदा-यदा धर्म्यन्तरमहानसे धूमोदृश्यते, तदा-तदा तत्र वह्निरपि दृश्यते। अतएव धर्म्यन्तरसपक्षे सभूतधूमवह्न्योरनेकवारं सहदर्शनमेव धूमवह्न्यो व्याप्तिसम्बन्धस्य निश्चायको भवति। कुमारिल तं व्याप्तिसम्बन्धं पूर्वदृष्टं महानसादिगतं मन्यते। तथा तदेवानुमानाङ्ग कथयति, सकलदेशकालगत न स्वीकरोति। यथा—

तेन धर्म्यन्तरेष्वेषा यस्य येनैव यादृशी,
देशे यावति काले वा व्याप्यता प्राङ्निरूपिता।
तस्य तावति तादृक् स दृष्टोधर्म्यन्तरे पुन.,
व्याप्यांशो व्यापकांशस्य तथैव प्रतिपादक ॥[२]

मीमांसकमतानुयायिदार्शनिकाना सविधौ बहुभि' दर्शनै धूमवह्न्यो साहचर्य-ज्ञाने जाते महानसादौ अग्निना सह धूमव्याप्तिरवगम्यते। किन्तु तत्पश्चात् एवं ज्ञानं भवति यत्र यत्र धूमोभवति, तत्र तत्राग्निर्जायते। एतत्परोक्षरूपत्वेनानु-मानिकमस्ति। एतेन प्रतीयते यत् कुमारिलस्तदनुवर्तिन मीमांसका' तार्किका व्याप्ति केवल सपक्षगता मन्वते, ता सर्वोपसहारवती न स्वीकुर्वन्ति। अतएव ते ता भूयोदर्शनगम्या कथयन्ति।

साङ्ख्यदर्शने व्याप्तिग्रह प्रत्यक्षद्वारा स्वीकृतोऽस्ति। साध्यसाधनयो साहचर्यस्य ग्राहयिता प्रत्यक्षभूयोदर्शनव्यभिचारादर्शनादिसहकारिभि सहकृतो भूत्वा व्याप्ति-निश्चय करोति। यत्र पूर्वसंस्काराः प्रबला भवन्ति तत्र व्याप्तिनिर्णय आगम-द्वारानुमानद्वारा च जायते। वेदान्तदर्शने भूयोदर्शनादिसहकृतनिर्विकल्पकानुभवादि गृह्णाति।

बौद्धदर्शने व्याप्तिग्रहणं सम्बन्धद्वयावृतमस्ति। (१) तदुत्पत्ति (२) तादा-त्म्यञ्च। ययो द्वयोः वस्तुनो कार्यकारणभावो भवति, तयोस्तदुत्पत्तिसम्बन्धो मन्यते। यथा धूमोवह्निश्च। तथा ययोर्द्वयो व्याप्यव्यापकभावो भवति, तयो तादात्म्यसम्बन्धोऽङ्गीकृत । यथा सत्वक्षणिकत्वयो । अथवा शिंशपात्ववृक्षत्वयो । इमौ द्वौ सम्बन्धौ विहाय अन्य कोऽपिसम्बन्ध प्रमाणं वाऽविनाभावस्य नियामको नियामक वा नास्ति। न वा दर्शनप्रत्यक्षेण तस्य स्थापना सम्भवा विद्यते। न चादर्शनाप्रत्यक्षानुपलम्भेन। अरचट धर्मकीर्ते' पक्षं समर्थयन् लिखितवान् यत् तादात्म्येन तदुत्पत्या च सह अविनाभावोऽविनाभावेन च सहोभेमते व्याप्ते स्तः। येषु न तादात्म्य न च तदुत्पत्तिर्भवत , तेषु नाविनाभावो भवति। लिखितमस्ति—

---

२ मीमांसाश्लोकवार्तिकम् १।१।५, अनुमानपरिच्छेद श्लोक : १०।११

तादात्म्यतदुत्पत्तिभ्यामविनाभावो व्याप्तः, तयोश्च निश्चय सारात्। तस्य च तयोरेवभावादतत्स्वभावस्यातदुत्पत्तेश्च तदव्यभिचारनियमाभावात्।[1]

## जैनदर्शने व्याप्तिग्रहणम्

जैनविचारकैः तर्कद्वारा व्याप्तिनिश्चयः प्रतिपादितः। प्रत्यक्षगम्यसाध्यसाधनवत् अनुमेयादिसाध्यसाधनयोरपि व्याप्तिर्भवति। सूर्ये गतिर्दान्तगतिमत्त्व-हेतुना तथा गतिमत्त्वदेशात् देशान्तरप्राप्तिहेतुनाऽनुमीयते। अतोऽनुमानस्यो-त्पादकतर्कस्य तथा तर्कस्योत्पादकप्रत्यक्षस्य तथानुपलम्भस्य आवश्यकता भवति। तात्पर्य-मेतदस्ति यत् व्याप्तिरविनाभावस्वरूपास्ति तथा तस्याश्च सर्वत्र साहचर्योऽस्ति, यया सर्वोपसंहारवती भवति। न तज्ज्ञानप्रत्यक्षद्वारा सम्भवमस्ति, यतः प्रत्यक्षं संनिहितं वर्त्तमानमेव च वेत्ति। नासन्निहितं वर्त्तमानञ्च तज्जानाति। अनुमान-द्वाराऽपि व्याप्तिग्रहणमसम्भवमस्ति, यतो व्याप्तिज्ञानं विना नानुमानोत्पत्ति जायते। अन्यानुमाने व्याप्तिग्रहणेऽन्योन्याश्रयस्याख्याति। आगमादिप्रमाणानां विषयेषु भिन्नेषु तद्द्वाराऽपि व्याप्तिनिश्चयोऽसम्भवोऽस्ति। अतो व्याप्तिज्ञानाय परोक्षात्मकतर्कस्य पृथक् प्रमाणस्वीकृतिरनिवार्यास्ति।

## व्याप्तिभेदा

तर्कग्रन्थेषु व्याप्तेरनेकभेदा कीर्तिता सन्ति। कुमारिलस्य मीमांसाश्लोक-वार्तिके सम-विषमभेदाभ्यां व्याप्तेर्भेदद्वयमिलति। यदा व्याप्यव्यापकयोर्देश-कालयोरपेक्षा समदेशकालवृत्तिर्भवति तदा तत्समव्याप्तं तन्निष्ठाव्याप्तिश्च सम-व्याप्तिरुदाह्रियते। यदा च व्यापकदेशकालाभ्यां न्यूनदेशकालवृत्तिर्भवति तदा तद्विषमव्याप्तं तन्निष्ठाव्याप्तिश्च विषमव्याप्तिः कीर्त्यते। कथितमस्ति—

यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत्,
स व्याप्यो व्यापकस्तस्य समो वाऽभ्यधिकोऽपि वा।
व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यते,
तेन व्याप्ये गृहीतेऽर्थे व्यापकस्तस्य गृह्यते।
न ह्यन्यथा भवत्येषा व्याप्यव्यापकता तयोः।[2]

व्यापको व्याप्यस्य समदेशकालवृत्तिर्भवति, न व्याप्यम्। अतो व्याप्यन्तु व्यापकस्य गमकं भवितुं शक्नोति परं व्यापकं व्याप्यस्य तन्न। अतएव व्याप्यं गमकं

---

१ हेतु बिन्दु टीका—८

२. मीमांसा श्लोकवार्तिकम्, अनुमानपरिच्छेद, श्लोक : ५, ४, ६, पृष्ठ ३४८

व्यापकच गम्य स्वीकृतम् । व्याप्तेरिमौ द्वौ भेदौ कुमारिल-जयन्तभट्टोदयनै च स्वीकृतौ ।

अन्वयव्याप्ति-व्यतिरेकव्याप्तिभेदाभ्यामपि व्याप्तेर्भेदद्वयं स्वीकृतमस्ति अनयोर्भेदयो सर्वप्रथमसकेत प्रशस्तपादेन विहित । उदयन-जयन्तभट्ट-गगेश-केशव मिश्र-विश्वनाथपञ्चाननान्नम्भट्टप्रभृतिनैयायिकैरन्वयव्यतिरेकरूपव्याप्तिरङ्गीकृता । साध्यसाधनयो र्भावात्मकरूपमन्वयव्याप्ति. तदभावात्मकरूप व्यतिरेक व्याप्तिश्च कथिते स्त । इमे एव साधर्म्य-वैधर्म्यव्याप्ती कथ्येते ।

जैननैयायिकै तथोपपत्तिरन्यथानुपपत्तिश्चेति भेदद्वय व्याप्तेरङ्गीकृतम् । सति साध्ये साधनसत्ता तथोपपत्तिरस्ति । असति साध्ये साधनाभावोऽन्यथानुपपत्तिरस्ति । यथा सति वह्नावेव धूमसत्ता, वह्नावसति च धूमाभाव । वस्तुतो जैनतार्किका व्याप्तिन्त्वेकविधामेवामन्यन्त । परन्तस्य दर्शन प्रयोगोवा द्विविध प्रोक्त —( १ ) तथोपपत्तिरूपेण ( २ ) अन्यथानुपपतिरूपेण च । माणिक्यनन्दिना व्याप्त्याधारे सहभाविपदार्थे क्रमभाविपदार्थे च स्वीकृते सहभावनियम—क्रमभाव नियमरूपेण द्वैविध्य वर्णितम् ।

उल्लिखितभेदातिरिक्ता व्याप्तेरन्येऽपि त्रयो भेदा प्राप्यन्ते—

१ बहिर्व्याप्तिः
२ सकलव्याप्ति
३ अन्तर्व्याप्ति

सपक्षे साध्येन सह साधनव्याप्तिर्बहिर्व्याप्तिरस्ति । पक्षसपक्षयोरुभयो साध्येन सह साधनव्याप्ति सकलव्याप्तिरस्ति । असतो पक्षसपक्षयोरथवाऽहेतौ केवलसाध्येन सहाविनाभावसदभावोऽन्तर्व्याप्ति भवति । असत्यामन्तर्व्याप्तौ, अन्ये व्याप्ती निरर्थके स्त । यथा 'स श्याम' तत्पुत्रत्वात् इतरपुत्रवत्' इत्यनुमाने बहिर्व्याप्तिस्सकलव्याप्तिश्चोभे वर्तेते । परमन्तर्व्याप्त्यभावे तत्पुत्रत्वहेतुश्यामत्वसाध्यस्य साधकनास्ति एवमेव 'उदेष्यति शकटं कृत्तिकोदयात् इत्यनुमाने व बहिर्व्याप्तिर्नच सकलव्याप्तिरस्ति, किन्तु साधनस्य साध्येन सहान्तर्व्याप्तिसत्ताया कृतिकोदयस्य गमकमस्ति । एव विधानुमानाधारभूतव्याप्तिविचारो न्यायशास्त्रे सम्पन्नोऽस्ति । व्याप्तिज्ञानेनैवानुमानप्रमाण-सत्यता प्रतीयते ।

## अर्थापत्तिप्रमाणम्

मीमासक एकमर्थापत्तिनामकं स्वतन्त्रं प्रमाणं मन्यते । तस्य कथनमस्ति यदर्थापत्ति प्रत्यक्षादिभ्य एक भिन्नं प्रमाणमस्ति । यतस्तत्स्वरूपमन्यप्रमाणेभ्यो

भिन्नमस्ति । यस्य यस्मादिभिन्न स्वरूप भवति, तत्तस्मादि्भिन्न प्रमाण भवति । यथाऽनुमान प्रत्यक्षत एक भिन्नं प्रमाणमस्ति । तथैवार्थापत्ते स्वरूपमपि प्रत्यक्षादि प्रमाणेभ्यो नितान्त भिन्नमस्ति । यथा प्रत्यक्षादिपञ्चप्रमाणैं र्ज्ञातोऽथवाश्रुतोऽर्थ , या विना न सभवेत्, साऽदृष्टार्थकल्पनाऽर्थापत्ति कथ्यते । वात्स्यायनो लिखित-वान् "वाक्यार्थसप्रत्ययेनाभिहितस्वार्थस्य प्रत्यनीकभावाद् ग्रहणमर्थापत्ति ।"[1] अनुपपद्यमानेनार्थेनोपपद्यमानार्थस्य कल्पनाऽर्थापत्तिरस्ति । यथा वृष्ट्या मेघ-ज्ञानस्य कल्पना क्रियते । अर्थापत्ते विशेषविवेचन मीमासकमतानुसार न्यायकोशे विहितमस्ति—"उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्ति । तत्रोपपाद्यज्ञान करणम् । उपपादकज्ञान फलम् । येन विना यदनुपपन्न तत्त्रोपपाद्यम् । यस्याभावे यस्यानु-पपत्तिस्तत्तत्रोपपादकम् । यथा रात्रिभोजनेन विना दिवाऽभुञ्जानस्य पीनत्वमनुप-पन्नमिति तादृशपीनत्वमुपपाद्यम् । यथा वा रात्रिभोजनस्याभावे तादृशपीनत्वस्या नुपपत्तिरिति रात्रिभोजनमुपपादकम् । अत्रार्थस्यापत्तिर्नाम कल्पनेति षष्ठी-समासेन रात्रिभोजनकल्पनारूपाया प्रमितावर्थापत्तिशब्दो वर्त्तते । अर्थस्यापत्तिर्नाम कल्पना यस्मादिति बहुव्रीहिसमासेन कल्पनाया करणभूते पीनत्वादिज्ञानेऽपि वर्त्तते । एव च फलकरणयोरुभयोरर्थापत्तिपदप्रयोगो भवति ।"[1]

प्रत्यक्षादिनिमित्तभेदेनार्थपत्ति षट्प्रकारा भवति । यथा प्रत्यक्षेणाग्ने दाहरूप कार्य वीक्ष्याग्ने ज्वलनशक्तिकल्पनाक्रियते । अन्यथा स ज्वलनेऽशक्त इत्येषा प्रत्यक्षपूर्विकार्थापत्तिरस्ति । सूर्यमेकस्थानादन्यत्रावेक्ष्यानुमानत प्रतीयते यत् सूर्यश्चलति । तथाऽनुमानेन ज्ञाताया सूर्यगतेराधारे कल्प्यते यत् सूर्येगमनशक्ति रस्ति । एषानुमानपूर्विकाऽर्थापत्तिर्विद्यते । उपमानप्रमाणेन गवयसादृश्यविशिष्टा गा ज्ञात्वा तदाधारे एषा कल्पना यत् सादृश्यविशिष्टगवि उपमानप्रमाणद्वारा ग्राह्यशक्तिरस्ति, अन्यथा नोपमानप्रमाणेन तद्ग्रहण भवितु शक्नोति । एषोपमान-पूर्विकापत्तिरस्ति । इमा अर्थापत्तयो भिन्नप्रमाणानि सन्ति । यत इमा अतीन्द्रिय शक्ति गृह्णन्ति । शक्ति प्रत्यक्षेणज्ञातु न शक्यते, यत साऽतीन्द्रियास्ति । नानु-मानेन ज्ञातुशक्यते । यतोऽस्मिन् विषयेप्रत्यक्षस्य प्रवृत्तिर्नास्ति, तस्मिन्नानुमानस्य प्रवृत्तिर्भवितुं शक्नोति । शब्दोपमानप्रमाणयोस्तु सम्भावनैव नास्ति शक्तिग्रहणाय यतश्शब्दसादृश्ये विनैव शक्तिप्रतीतिर्भवति । अतोऽर्थापत्तिरेव शक्ति विषयीकर्तु शक्नोति ।

---

१ वात्स्यायन २ । २ । २

१ न्यायकोश , पृ० ७९

यदि शब्दे वाचकशक्तिर्नाभविष्यत्, तदा शब्देनार्थप्रतीतिर्नाभविष्यत्। अनेनार्थेन शब्दे वाचकशक्तिं ज्ञात्वा तदाधारे शब्दे 'नित्यताया कल्पना अर्थापत्तिपूर्विकाऽर्थापत्तिरस्ति। 'पीनो देवदत्त दिवा न भुङ्क्ते' एतच्छ्रुत्वा एव कल्प्यते यत् देवदत्तो रात्रौ भुङ्क्ते। 'भोजनं विना पीनत्वं सम्भवं नास्ति। एषाश्रुतार्थापत्तिरस्ति। जीवितं चैत्रनामकं पुरुषं गृहेऽदृष्टवा तदाधारे कल्पनैषा यदसौ क्वापि वहिर्गतोऽस्ति, अभावपूर्विकार्थापत्तिर्विद्यते। प्रभाकरभाट्टमीमासकौ अर्थापत्तेः विषयमनुमानान्तर्गत मन्वाते। यतोऽनुमानसामग्र्यर्थापत्तौ न प्राप्यते। पक्षधर्मतादिसामग्र्या यज्ज्ञानं जायते, तदेवानुमानं कथ्यते सा सामग्री नार्थापत्तावस्ति अतोऽर्थापत्तिरेक पृथकप्रमाणमस्ति। अर्थापत्ते दृष्टश्रुतभेदावपि विहितौ स्त। यत प्रत्यक्षादिभि ज्ञातस्य श्रुतस्य वार्थस्यान्यथानुपपत्याधारेऽदृष्टार्थस्य कल्पना क्रियते। स दृष्ट श्रुतो वार्थ साध्येन सह सम्बद्धो भवति।

अनुमाने गम्यं विना गमकं न भवति। यथाग्निं विना धूमो न भवति। किन्त्वर्थापत्तौ गमक विना गम्यं न भवति। यथा चैत्रस्य बहिर्निवास. गम्योऽस्ति स गम्यो जीवित सन् गृहेऽभावं विना न सिद्धयति। अतोऽर्थापत्तावनुमाने विपरीतता प्राप्यते। अतएवार्थापतिरनुमानतो भिन्नं प्रमाणमस्ति।

कतिपयविचारका अर्थापत्तेरन्तर्भावमनुमानप्रमाणे कुर्वन्ति। यतोऽनुमानमन्यथानुपन्नाविनाभाविहेतोरुत्पद्यते। अर्थापत्तिश्चान्यथानुपपद्यमानादर्थात्। अन्यथानुपपन्नत्वहेतुरन्यथानुपपद्यमानार्थश्चैक एव विद्येते। तयोर्न पार्थक्यमस्ति उभौ व्याप्तिविशिष्टत्वादभिन्नौ वर्तेते। एतत्परं स्पष्टमस्ति यत् एकेन वस्तुनान्यस्य वस्तुन आक्षेपस्तदैव भवति यदोभयो व्याप्तिव्यापकभावोऽथवा व्याप्ति सम्बन्धो भवेत्। देवदत्त पीनोऽस्ति, दिने च न भुङ्क्ते, अत्रार्थापत्तिद्वारा रात्रिभोजनस्य कल्पना क्रियते। परं वास्तवपीनत्वभोजनस्याविनाभावित्वात् तथा दिने भोजनस्य निषेधात् तत् देवदत्तस्य रात्रिभोजनास्यानुमापकमस्ति। अनुमानमेवं प्रकारमस्ति—देवदत्त रात्रौ भुङ्क्ते, दिवाऽभोजित्वेसतिपीनत्वान्यथानुपपत्ते। अत्रान्यथानुपपत्यान्तर्व्याप्तिविवक्षितास्ति। बहिर्व्याप्तिस्सकलव्याप्तिर्वानास्ति। यत इमे द्वेऽपि व्याप्ती अव्यभिचरिते न स्त अतोऽर्थापत्ति अनुमानञ्च व्याप्तिपूर्वकत्वात् उभयोरप्यैक्यमेव। पृथक् पृथक् प्रमाणं नास्ति।

किञ्चस दृष्टार्थश्श्रुतार्थो वा स्वसाध्येनसह सम्बद्धोऽस्ति, असम्बद्धो वा। यद्यसम्बद्धोऽस्ति, तदा सोऽदृष्टार्थस्य कल्पनाया कारणं कथं भवितुं शक्नोति। यतो यकमपि पदार्थं वीक्ष्य यस्यकस्यापि पदार्थस्य कल्पना कर्त्तुं न शक्यते। अन्यथा

हेत्वव्यवस्था भविष्यति । अथ च यद्यसावर्थ स्वसाध्येन सह सम्बद्धोऽस्ति । दातद्भवज्ञानमनुमानमेवास्ति । यतः स्वसाध्येन सह सम्बद्धताया नामैवाविनाभावोऽस्ति । यद्यदविनाभावेन ज्ञानं भवति । तदनुमानमेवास्ति । अतोऽर्थापत्तिरविनाभावबलेन यदोत्पद्यते, तदातत्समावेशोऽनुमानेऽवश्य भवेत् ।

किञ्च स दृष्टार्थ श्रुतार्थो वा स्वसाध्येन सह सम्बद्धस्सन्नपि सम्बद्धरूपेण ज्ञातेऽदृष्टार्थकल्पनाया निमित्तो भवति, अथवाऽज्ञातेसत्यपि । अज्ञातेसत्यदृष्टार्थ कल्पनाया निमित्तो न भवितु शक्नोति । अन्यथा बालजनाअपि तस्माददृष्टार्थ कल्पना करिष्यन्ति । यदि ज्ञाते सति सोऽदृष्टार्थकल्पनाया निमित्तो भवति, तदा साध्यज्ञानावसरे एव सोऽर्थ स्वसाध्येन सह सम्बद्धरूपेण ज्ञातु शक्यतेऽथवा पूर्वम् । प्रथमपक्ष सोऽर्थ स्वसाध्येन सह सम्बद्धरूपेण प्रमाणान्तरेण ज्ञायतेऽथवा तेनैव प्रमाणेन । प्रथमपक्षो न समीचीनोऽस्ति, यत साध्यस्यज्ञानावसरे तत्सम्बद्धस्य ग्राहक प्रमाणान्तरेण सम्भवो नास्ति । यदि सम्भवोऽस्ति, तदा साध्यसिद्धिरपि तेनैव प्रमाणान्तरेण भविष्यति । पुनरर्थापत्ते कावश्यकता ? अथवा स्वीकृता यामप्यर्थापत्तौ सा नानुमानतो भिन्ना विद्यते । यत सा तादृशाद्धेतोरुत्पन्ना विद्यते यस्य स्वसाध्येन सह सम्बन्ध प्रमाणान्तरेण ज्ञायते । अथ च यत् एतादृशाद्धेतोरुत्पद्यते, तदनुमानमेवास्ति । यथा धूमात्सपद्यमान वह्निज्ञानम् । अर्थापत्तिरप्येतादृशाद्धेतोरुत्पद्यते । अतस्तदनुमानमेवास्ति ।

यदि दृष्टार्थं श्रुतार्थं वा स्वासाध्येनसह सम्बन्धरूपेणार्थापत्तिरेव जानाति, तदान्योन्याश्रयदोष आपतति । सिद्धायामर्थापत्तौ, अर्थापत्तेरुत्थापकार्थस्य स्वसाध्येन सह सम्बद्धरूपेण ज्ञप्ति सिद्ध्येत । तत्सिद्धौ, अर्थापत्ति सिद्ध्येत् । यद्यर्थापत्तेरुत्थापकार्थं स्वासाध्येनसह सम्बन्धरूपेण पूर्वमेव ज्ञायेत, तदा साध्यधर्मणि ज्ञायते, दृष्टान्तधर्मणि वा । प्रथमविकल्पेऽर्थापत्ति व्यर्था भवति । यतस्तत्साध्यन्तु प्रथमत एव सिद्धमस्ति । द्वितीयो विकल्पोऽपि न समीचीन. प्रतिभाति, यतोऽर्थापत्तेरुत्थापकार्थसम्बन्धस्यज्ञानदृष्टान्ते न स्वीक्रियते ।

किञ्चार्थापत्तेरुत्थापकार्थस्य स्वसाध्येन सह सम्बन्धज्ञान यदि दृष्टान्ते भवति, तदा भूयोभूयो दर्शनेन भवति, अथवा विपक्षेऽनुपलम्भेन भवति, अथवाऽन्ययाऽर्थापत्त्या भवति । वारंवारं दर्शनेन न भवितु शक्नोति । यतोऽतीन्द्रियशक्तेर्वार-वार दर्शनमसम्भवमस्ति । विपक्षेऽनुपलम्भेनापि न भवितु शक्नोति । यतो विपक्षेऽनुपलम्भोऽपि उपलब्धियोग्यपदार्थेष्वेव सम्बन्धज्ञान कारयितु शक्तोऽस्ति । अन्यथाऽर्थापत्त्यापि प्रथमार्थापत्तेरुत्थापकार्थस्य स्वसाध्येन सह सम्बन्धज्ञान न भवितु शक्नोति, यतोऽनवस्थादोष आपतति ।

वस्तुत' सर्वत्राविनाभाव-सम्बन्धप्रतीति. तर्कप्रमाणेनैव भवति। तर्कागोचरं किमपि नास्ति, यस्मात् शक्तेरतीन्द्रियत्वात् केनापि हेतुना सह तत्सम्बन्धस्य प्रतिपत्त्यभावात् अनुमानप्रमाणेन शक्तिर्न ज्ञातुं शक्यते।

प्रत्यक्षपूर्वकार्थापत्ते' यत्स्वरूपं कथितमस्ति यत् प्रत्यक्षेणाग्ने' दाहरूपं कार्यमवगत्य तदन्यथानुपपत्त्याग्नौ दाहकत्वशक्तेः कल्पना प्रत्यक्षपूर्विकाऽर्थापत्तिरस्ति। अत्रानुपपत्त्या कि तात्पर्यम्? दाहकशक्तिं विना स्फोटादेरभावो यद्यनुपपत्तिस्तदा दाहकशक्ति विना स्फोटादिकार्याणि न भवितुं शक्नुवन्ति। एतद्व्यतिरेककथनमेवाभूत् तथा चास्मिन्व्यतिरेके, सत्या दाहकशक्त्यामेव, स्फोटादिकार्याणि भवन्ति। एतदन्वय प्रकटीकरोति तथान्वयोऽतिरेकश्च हेतोरेव धर्मौ स्त। अस्या परिस्थितौ अर्थापत्तिरनुमानात् कथ भिन्ना भवितुं शक्नोति। स्फोटादिकार्य वीक्ष्य तत्कारणसिद्धि' अर्थापत्त्यैव न भवति, अनुमानेनापि भवति। यत स्फोटादीनि कारणपूर्वकाणि भवन्ति, यतस्तानिकार्याणि सन्ति। यत्कार्यं भवति, तत्कारणपूर्वकमेव भवति। यथा धूमादि.। यत स्फोटादीनि कार्याणि सन्ति, अत कारणपूर्वकाणि भवेयुः।

उक्तकथनेन अनुमानस्योपमानपूर्वकार्थापत्तेश्चापि निषेधो भवति। यतस्तत्रापि प्रत्यक्षपूर्विकायामर्थापत्तौ प्रदत्ता दोषा आयान्ति। शब्दस्य नित्यत्वसिद्धौ यार्थापत्तिपूर्विकार्थापत्ति कथिता, सापि न समीचीना। शब्दोऽनित्य सन्नपि वाचको भवितु शक्नोति। अभावपूर्विकोत्पद्यमानार्थापत्तिरपिनानुमानभिन्ना भवति। यत. जीवन् चैत्रो गृहे नास्ति, एतद्धेतुना जीवितचैत्रस्य वहिर्निवास सिद्ध्यति। अतएवार्थापत्तिप्रमाण पृथक् प्रमाणमनङ्गीकृत्यानुमानप्रमाणे तत्स्वीकृतिरुपयुक्ता।

प्रमाणफलम्

प्रत्येकप्रमाणं फलवद्भवति। फलाभावे किमपि चिन्तन चिन्तन न स्वीकर्तुं शक्यते। अत्र सन्निकर्षवादिना नैयायिकानामेषतर्कोऽस्ति, यत् यदि ज्ञान प्रमाण मन्यते, तदा फलाभावो भवति। प्रमाणफलं ज्ञानमस्ति, नान्यत् किञ्चित्वर्त्तते। तज्ज्ञान यदि प्रमाणं मन्येत, तदा तस्य नान्यत् किमपि फल भवितुं शक्नोति तथा प्रमाणस्य फलेनावश्यं भवितव्यम्। यदि सन्निकर्षोऽथवेन्द्रियं प्रमाणं मन्येत, तदा तत्फल ज्ञान सपद्यते।

उक्त कथनेनैतत्स्पष्टमस्ति यत् सर्वे चिन्तकै. प्रमाणविचारं कुर्वद्भि तत्फलस्यापि विचारो विहित. यतो यदा प्रत्येककार्यस्य यत्किञ्चित्फल भवति, तदा प्रमाणस्यापि फलमपेक्षितमस्ति। फलं बिना प्रमाणान्वेषण को बुद्धिमान् कुर्यात्?

वैदिकदर्शनेषु प्रमाणफलं ज्ञानमस्ति तथा येन कारणेनज्ञानमुत्पद्यते, तत्प्रमाणमस्ति। येषु दर्शनेषु ज्ञानमेव प्रमाणं स्वीकृतम्, तेषु प्रमाणफलं किं भविष्यति? प्रमाणफलं द्विविधं भवति—साक्षात् परम्पर्या च। साक्षात्फलन्तु प्रमाणाभिन्नमस्ति तथा परम्पर्या प्रमाणतो भिन्नमस्ति। प्रमाणस्य साक्षात्फलन्तु प्रमाणज्ञातवस्तुविषयकाज्ञाननाशएवास्ति। परम्पर्याफलं हानम्, उपादानम्, उपेक्षा चास्ति। यतः वस्तुज्ञानानन्तरं यदि तद्वस्त्वहितकारि प्रतीयते, तदा ज्ञाता तत् परित्यजति। यदि च तद्धितकारि प्रतीतं भवति, तदा तद् गृह्णाति। यदि च तज्ज्ञातवस्तुना न किमपि प्रयोजनं सिद्ध्यति, तदा तदुपेक्षते। अज्ञाननिवृत्तेः पश्चात् हानोपादानसम्बन्धिनी बुद्धिरुत्पद्यते।

सारांशः एषोऽस्ति यत् प्रमाणेनाज्ञाननिवृत्तिर्भवति तथाऽज्ञाननिवृत्तेर्हानादिबुद्धिर्जायते। अतः प्रमाणस्य साक्षात्फलमज्ञाननिवृत्तिर्विद्यते। परम्पर्याफलञ्च हानोपादानोपेक्षाबुद्धिरस्ति। अतः प्रमाणात्फलं भिन्नमपि भवति तथाऽभिन्नमपि। यदि प्रमाणं फलञ्च सर्वथा भिन्नमथवाऽभिन्नं मन्येत तदा तत्र प्रमाण-फलयोर्व्यवहारः न संपत्स्यते। अतः क्रमोत्पद्यमानेषु ज्ञानेषु पूर्व-पूर्वज्ञानं प्रमाणं तथोत्तरोत्तरज्ञानं तत्फलं भवति।

नैयायिकानामभिमतमस्ति यत् प्रमाणफलयोः तादात्म्यं न संपद्यते। यतः प्रमाणं कारकमस्ति। यः कारको भवति, स स्वाभिन्नपदार्थं करोति। यथा कुठारः स्वाभिन्नकाष्ठं भिनत्ति। प्रमाणमपि कारकमस्ति। अतः स्वाभिन्नपदार्थे क्रियां करोति। प्रमाणञ्च स्वाभिन्नफलं करोति, यतस्तत्करणमस्ति। यत्करणं भवति, तत्स्वाभिन्नफलस्य कर्तृत्वं भजते। यथा कुठारादि। कुठारादयः स्वात्मसु क्रियां कुर्वन्तो न दृश्यन्ते। यः कर्त्ता नास्ति, न तत्करणं भवितुं शक्नोति। अतो यत् कर्त्तरि कर्मण्यथवा स्वाभिन्नफलं करोति, तत्करणमस्ति।

प्रमाणस्य फलस्वीकृतिः न समीचीना। यतः करणरूपता फलरूपता चैतद्धर्मद्वयं परस्परं विरोध्यस्ति। अतः एकस्मिन् वस्तुनि सहैव न स्थातुं शक्नुतः। अतः · प्रमाणफलयोर्भेदस्वीकृतिर्नश्रेष्ठा। उदाहरणार्थं विशेषणं ज्ञानप्रमाणमस्ति विशेष्यज्ञानञ्च फलमस्ति। एतयोरभेदः कथं संभवति। यतः द्वयोः ज्ञानयोरुत्पादकसामग्री भिन्नास्ति तथा विषयोऽपि भिन्नोऽस्ति। विशेषणज्ञानस्योत्पत्तिः विशेषणेन सहेन्द्रियसन्निकर्षरूपविशेषसामग्र्या भवति तथा विषयभेदस्तूभयोः ज्ञानयोः स्पष्ट एवास्ति। यतः एकस्य विषयः विशेषणमस्ति तथान्यस्य विषयः विशेष्यमस्ति।

चिन्तकै. नैयायिकस्यैतस्या अपि विचारधाराया समीक्षा विहिता। कथितं यत् प्रमाणफलयोर्भेदसिद्ध्यै य कारकहेतुर्दत्त, तेन प्रमाणफलयो कथञ्चित् भेद सिद्ध्यति। अथवा सर्वथा भेद सिद्ध्यति। यदि कथञ्चित् भेद सिद्ध्यति तदा स इष्टोऽस्ति। यतोऽज्ञाननिवृत्ति प्रमाणधर्मोऽस्ति। हानोपादानञ्च प्रमाण-कार्यमस्ति। एक प्रमाणतोभिन्नमन्यत् अभिन्नम्। प्रमाणस्याभिन्नफलमज्ञान-निवृत्तिरस्ति। यत स प्रमाणधर्मोऽस्ति। योयस्य धर्मो भवति, स तदभिन्नो भवति। यथा दीपकस्य स्व-पर-प्रकाशकरूपो धर्म दीपकादभिन्नोऽस्ति। एवमेव-स्वरूपपररूपसम्बन्ध्यज्ञानापनयनरूपाज्ञाननिवृत्ति प्रमाणधर्मोऽस्ति। अतस्तस्य तदभिन्नत्व सिद्ध्यति, किन्तु धर्मधर्मिणो सर्वथा भेदाभेदयो स्वीकृतयो परा न सम्पद्यते। यतो यस्मिन् सर्वथा भेदो भवति, तस्मिन् धर्मधर्मिणोर्भावो न भवति। यथा सह्यविन्ध्यपर्वतयो सर्वथा भेदोऽस्ति। अतस्तस्मिन् धर्मधर्मिभावो नास्ति। एवमेव यस्मिन् सदाऽभेदो भवति, तस्मिन्नपि धर्मधर्मिभावो न निष्पद्यते। अतएव कथञ्चित् भेदस्वीकृतिरेव ज्यायसी। साधकतमत्वात् ज्ञान प्रमाणमस्ति, अज्ञान-निवृत्तिरूपत्वाच्च फलमस्ति। ज्ञानस्य स्वपरग्रहण-व्यापार एव तस्य साधक-तमत्वमस्ति। स्वकारणेभ्य उत्पद्यमान ज्ञानं स्वार्थग्रहणरूपव्यापार कुर्वद् स्वार्थ व्यवसायरूपेण परिणमति। अत कथचित् सत्यप्यभेदे प्रमाणफलयो कार्य कारणभाव सिद्ध्यति। एप तर्कोऽपि युक्तिसगतो न प्रतीयते यदेकस्मिन् वस्तुनि सदैव कारणरूपता फलरूपता च न सिद्ध्यति। अपेक्षाभेदेनैक वस्तुन्य-नेककारकाणि जायन्ते एवमेवैकस्मिन्नेव कर्मणि प्रमाणरूपता फलरूपता च सिद्ध्यत।

ननु अज्ञाननिवृत्तिर्ज्ञानरूपास्ति। अत सा न स्वकार्य भवितु शक्नोति। अस्या परिस्थितौ कथमज्ञाननिवृत्ति प्रमाणफल भवितुं शक्नोति। इति चेन्न। स्वार्थग्रहणस्य व्यापाररूपोपयोग प्रमाण कथ्यते तथा स्व-निश्चयरूपार्थपरिणते-र्नामाज्ञाननिवृत्तिरस्ति। अतोऽज्ञाननिवृत्ति प्रमाणफलमस्ति।

यद्यज्ञाननिवृत्ति ज्ञानरूपा मन्येत, वा सा धर्मधर्मिरूपा मन्येतायवा धर्मरूपा मन्येत। यद्यज्ञाननिवृत्तिः धर्मिरूपास्ति, तदा कोऽस्ति तद्धर्म ? यदि ज्ञानं तद्-धर्म. तदाऽज्ञाननिवृत्ति धर्मिणी जाता, ज्ञानञ्च तद्धर्मो जात। परनैतदुचितम्। यतोऽज्ञाननिवृत्तिर्ज्ञानाश्रितास्ति। अत सा धर्मिरूपिणी न भवितुं शक्नोति। यत य पराश्रितो भवति, स धर्मरूप एव भवति। अतएव पराश्रितत्वात् अज्ञान निवृत्ति. धर्मरूपैवास्ति, तथा यदा सा धमर्मरूपास्ति, तदाऽज्ञाननिवृत्ति ज्ञान-

पेवास्ति। एवमभेद न सपत्स्यते। पर ज्ञानधर्मोऽज्ञाननिवृत्तिरस्ति—एव दएव भविष्यति, यतो धर्मधर्मिणोरुपचारेणैवाभेदकथन कर्त्तुं शक्यते।

किञ्चाऽज्ञाननिवृत्ति कार्यरूपास्ति, अथवाऽकार्यरूपास्ति। यदि सा कार्यरूपानास्ति, तदा सर्वत्र सर्वदा तत्सत्तया सर्वे सर्वदर्शिनो भविष्यन्ति। यदि सा कार्यरूपास्ति, तदा किं तत्कारणमस्ति? प्रमाणरूपेण स्वीकृत ज्ञानमथवा किमप्यन्यत्? यदि किमप्यन्यत्तत्कारणमस्ति, तदा प्रमाणरूपेण स्वीकृतस्य ज्ञानस्योत्पत्त्या प्रथम तदनन्तरञ्चाप्यज्ञाननिवृत्तेरुत्पत्ते प्रसङ्ग उपस्थितो भवति। एतत्प्रसगाद्रक्षार्थं यदि प्रमाणादेवाज्ञाननिवृत्तेरुत्पत्ति मन्यते तदैतदेव सिद्ध्यति-यत् अज्ञाननिवृत्ति प्रमाणस्य फलमस्ति। अतो प्रमाणधर्मत्वात् अज्ञाननिवृत्तिरूपफल प्रमाणाभिन्नमस्ति। हानोपादानादिफलञ्च प्रमाणभिन्नमस्ति।

ननु यथा स्वार्थवाहिज्ञानमज्ञाननिवृत्तिरूपेण परिणमति, तथैव हानोपादानरूपेणापि परिणमति। तदा हानोपादानानि विभिन्नफलानि कथ सन्ति? इति चेन्न। अज्ञाननिवृत्तिरूपफलोत्पत्तौ हानोपादानरूपफलस्योत्पत्तिर्भवति। अतोऽज्ञान निवृत्तिरूपफलस्य व्यवधानेन हानोपादानरूपफलानिप्रमाणाभिन्नानि सन्ति। अर्थात् प्रमाणहानोपादनयोर्मध्येऽज्ञाननिवृत्तिरायाति। यत प्रमाणद्वाराऽज्ञानेऽपनीते ग्रहण क्रियतेऽथवा तत्त्यागो विधीयते। किन्त्वज्ञाननिवृत्ति-प्रमाणयोर्मध्ये व्यवधायको न कोऽप्यस्ति। अत प्रमाणादज्ञाननिवृत्तिरभिन्नास्ति। एवं प्रकारेण कारक हेतुना प्रमाणफलयो. सर्वथा भेदो न सिद्ध्यति।

प्रमाणाभास

यज्ज्ञान प्रमाणमसदपि प्रमाणवत् प्रतीयते, तत् प्रमाणाभासं कथ्यते। सामान्यत मिथ्याज्ञान प्रमाणाभास कथ्यते। किन्तु, किमपि मिथ्या ज्ञान सर्वथा प्रमाण न भवति। प्रमाणताया अप्रमाणतायाश्च कारणमविसवाद विसवादश्च स्त। यत्र येन रूपेणाविसवादोऽस्ति, तत्र तेनैवरूपेण प्रमाणतास्ति। यथा यस्य नेत्रे कामलादिरोगै विकृते भवत, स आकाशे चन्द्रद्वय पश्यति। एतज्ज्ञान चन्द्रस्य सख्याविषये विसवाद्यस्ति, किन्तु चन्द्रविषयेऽविसवाद्यस्ति। अर्थात् चन्द्रविषये सत्यमस्ति, किन्तु सख्याविषयेऽसत्यमस्ति। एवमेव सर्वाणि सम्यक् ज्ञानान्यपि सर्वथाप्रमाणानि न भवन्ति। यथा सुनयनोऽपि कदाचिदेव चन्द्रमस पश्यति यदसौ पृथ्वीसमीपे वर्त्तते। परमेषा प्रतीति न सत्या वर्तते। अत. यज्ज्ञान यद्विषयेऽविसवाद्यस्ति, तत्तद्विषये प्रमाणमस्ति, यस्मिश्च विषये विसंवाद्यस्ति, तद्विषये अप्रमाणमस्ति।

ननुयदि किमपि मिथ्याज्ञानं सर्वथाऽप्रमाणं नास्ति तथा सम्यक् ज्ञानं सर्वथा प्रमाण नास्ति, तदा लोके यत्किञ्चिद्ज्ञानं प्रमाण किञ्चिच्चाप्रमाण मन्यते, तद्व्य-वस्था कथं भविष्यति । इति चेत्, यस्मिन् यस्मिन् ज्ञानेऽविसवादस्याधिकता भवति तल्लोके प्रमाणं मन्यते, यस्मिश्च विसवादस्याधिकता भवति, लोके तदप्रमाण मन्यते । वस्तुतः प्रमाणाप्रमाणयो र्व्यवस्था वाह्यपदार्थस्यापेक्षयैवास्ति । यज्ज्ञान-मसद्वस्तु सद्रूपेण जानाति, तत् प्रमाणाभासमस्ति, यथा शुक्तौ ज्ञानम् । इमे द्वेऽपि ज्ञाने स्वरूपापेक्षया प्रमाणे स्त । यत सर्वेषा ज्ञानाना तत्सवेदन भवति, तत्प्रमाणमस्ति । आशय एषोऽस्ति यत् ज्ञान स्वमपि जानाति, वाह्यपदार्थानपि जानाति । स्वापेक्षया तु सर्वाणि ज्ञानानि प्रमाणानि भवन्ति । यतो ज्ञानास्तित्वस्य यत्प्रत्यक्ष भवति, यज्ज्ञान जातमिति, तस्याप्रमाणताया किमपि कारणं नास्ति । बाह्यपदार्थापेक्षया किमपि ज्ञानं प्रमाणं भवति किमप्यप्रमाण भवति ।

प्रमाणवत्प्रमाणाभासस्याप्यनेकभेदा सन्ति । यथा—प्रत्यक्षाभास , परोक्षा-भास , स्मरणाभास , प्रत्यभिज्ञानाभास , तर्काभास , अनुमानाभासश्च । स्पष्टज्ञान प्रत्यक्षकथ्यते । अतोऽस्पष्टज्ञानस्य प्रत्यक्षकथन प्रत्यक्षाभासोऽस्ति । अनुभूतिविषय निर्विकल्पकप्रत्यक्ष प्रत्यक्षमसत् प्रत्यक्षाभासोऽस्ति । स्पष्टज्ञानस्य परोक्षकथन परोक्षाभासोऽस्ति । प्रथमानुभूते पदार्थे एतद्रूपसभवास्पष्टज्ञानस्य स्मरण कथ्यते । तद्विपरीतश्च स्मरणाभास कथ्यते । यथा यज्ञदत्तस्य देवदत्तरूपेण स्मरणाभास कथ्यते । एवमेतद्द्वयो समानवस्तुनोरेक वस्तु वीक्ष्य द्वितीयवस्तुज्ञानमथवा द्वितीय वस्तु विलोक्य तत्तदेवामत्वा तत्सदृशज्ञान प्रत्यभिज्ञानाभासोऽस्ति । अर्थादेकत्वे सादृश्य-प्रतीति सदृशे चैकत्वप्रतीति प्रत्यभिज्ञानाभासोऽस्ति ।

व्याप्तिज्ञानं तर्क. कथ्यते । अविनाभावनियमो व्याप्तिरुच्यते । यस्मिश्चाविना-भावो नास्ति, तस्मिन्नपि सभवं व्याप्तिज्ञान तर्काभासमस्ति । यथा यो देवदत्त-स्यपुत्रो भवति, स कृष्णो भवति । साधनेन साध्यज्ञानमनुमान कथ्यते । तद्विपरीत-मनुमानाभासं भवति । पक्षहेतुदृष्टान्तपूर्वश्चानुमानप्रयोगो भवति । अतोऽनुमाना-भासपरिज्ञानाय पक्षाभासहेत्वाभासदृष्टान्ताभासादिज्ञानमावश्यकमस्ति । साध्य लक्षणमिष्टमवाधितमसिद्धञ्चकथितमस्ति । अतोऽनिष्ट-बाधित-सिद्धाश्च पक्षाभास शब्देन व्यवह्रियन्ते । यथा शब्दस्य नित्यत्वसमर्थक कश्चन सहसा शब्दस्यानित्य-त्वं समर्थयेत्, तदैष पक्षाभासो भविष्यति । एवमेव शब्दस्य श्रोत्रेन्द्रियविषयसिद्धि-रपि पक्षाभासोऽस्ति । यत एतत्तु सिद्धमेवास्ति, यत् शब्दः श्रोत्रेन्द्रियेण श्रूयते । नात्र कस्यचन विवादो वर्त्तते । यत्र साध्य-प्रत्यक्षानुमानान्यागमलोकस्ववचनैर्बा-धितानि भवेयु , तत्र पक्षाभासो भवति । यथाग्नि शीतलोऽस्ति, यतो द्रव्य

मूर्तिरस्ति । यथाजलम् । अनुमानेऽस्मिन्नग्नेः शीतलता साध्यप्रत्यक्षवाधितास्ति । यत प्रत्यक्षेणा ग्निरुष्ण प्रतीयते । शब्दोनित्योऽस्ति, यत उत्पद्यते । यथा घट । अनुमानेऽस्मिन् शब्दस्य नित्यत्व साध्यमुत्पन्न भवति । अनेन हेतुना वाधितमस्ति । यत उत्पत्तिहेतोर्घटोऽनित्यो भवति, न नित्य ।

एतदनुमान वाधितमस्ति । मृते धर्मेण दु ख प्राप्यते । यतोऽसौ पुरुषाधीनो वर्त्तते । परमागमे धर्म सुखदायकोऽधर्मश्च दु खदायक स्वीकृतोऽस्ति । अतो मृते धर्मेण दु खं भवतीत्यनुमानपक्ष आगमेन वाधितोऽस्ति । मृत मनुष्यस्य कपाल शुद्धो भवति, यतोऽसौ प्राणिनोऽङ्गमस्ति । यथा शख इत्यादि । पर लोके प्राण्यङ्गत्वात् किञ्चिद्वस्तु पवित्र मन्यते किञ्चिद्वस्त्वपवित्र मन्यते । यथा गोरुत्पन्न दुग्ध शुद्ध मन्यते, पर गोमास न शुद्ध मन्यते । अत उक्तानुमानेन मनुष्यकपालस्य शुद्धत्वसिद्धि लोकवाधितमस्ति । एवमेव स्ववचनवाधितादीनि गृह्यन्ते ।

यस्य स्वसाध्येन सहाविनाभावोनिश्चितो भवेत्, स हेतु कथ्यते । यश्च तद्विपरीतो भवेत्, स हेत्वाभास उच्यते । हेत्वाभासस्य चत्वारो भेदा सन्ति । असिद्ध-विरुद्ध-अनैकान्तिक-अकिंचित्करा । यस्य हेतोरन्यथानुपत्तिप्रमाणेन न सिद्ध्यति सोऽसिद्ध हेत्वाभास कथ्यते । असिद्धहेत्वाभासस्य भेदद्वयवर्त्तते—स्वरूपासिद्ध संदिग्धासिद्धश्च । स्वसाध्यविरुद्धेन सह यस्य हेतोरविनाभावो निश्चीयते, स विरुद्ध हेत्वाभासो निगद्यते । यो हेतु विपक्षेऽपि तिष्ठति, सोऽनैकान्तिकहेत्वाभासोऽभिधीयते । यस्य हेतो साध्य केनाप्यन्येन प्रमाणेन निर्णीत भवति, अथवा प्रत्यक्षादिना वाधित भवति, सोऽकिंचित्करो हेत्वाभास कथ्यते ।

एव प्रकारेण प्रमाणाभास ज्ञात्वा प्रमाणज्ञाने प्रवृत्ति श्रेयस्करी वर्त्तते ।

अध्यक्ष ,
संस्कृत-प्राकृत-विभागस्य
आरास्थितस्य एच० डी० जैनकालेजस्य
मगधविश्वविद्यालयीयस्य

(डा ) नेमिचन्द्रशास्त्री